यत्र धर्मसुतो राजा यत्र भीमो महाबलः ।
यत्र माद्रवतीपुत्रौ रतिस्तत्र परा मम ॥ ०१८ ॥

तथैव स्वर्गकल्पेषु सभोद्देशेषु भारत ।
रमणीयेषु पुण्येषु सहितस्य त्वयानघ ॥ ०१९ ॥

कालो महांस्त्वतीतो मे शूरपुत्रमपश्यतः ।
बलदेवं च कौरव्य तथान्यान्वृष्णिपुङ्गवान् ॥ ०२० ॥

सोऽहं गन्तुमभीप्सामि पुरीं द्वारवतीं प्रति ।
रोचतां गमनं मह्यं तवापि पुरुषर्षभ ॥ ०२१ ॥

उक्तो बहुविधं राजा तत्र तत्र युधिष्ठिरः ।
स ह भीष्मेण यद्युक्तमस्माभिः शोककारिते ॥ ०२२ ॥

शिष्टो युधिष्ठिरोऽस्माभिः शास्ता सन्नपि पाण्डवः ।
तेन तच्च वचः सम्यग्गृहीतं सुमहात्मना ॥ ०२३ ॥

धर्मपुत्रे हि धर्मज्ञे कृतज्ञे सत्यवादिनि ।
सत्यं धर्मो मतिश्चाग्र्या स्थितिश्च सततं स्थिरा ॥ ०२४ ॥

तद्गत्वा तं महात्मानं यदि ते रोचतेऽर्जुन ।
अस्मद्गमनसंयुक्तं वचो ब्रूहि जनाधिपम् ॥ ०२५ ॥

न हि तस्याप्रियं कुर्यां प्राणत्यागेऽप्युपस्थिते ।
कुतो गन्तुं महाबाहो पुरीं द्वारवतीं प्रति ॥ ०२६ ॥

सर्वं त्विदमहं पार्थ त्वत्प्रीतिहितकाम्यया ।
ब्रवीमि सत्यं कौरव्य न मिथ्यैतत्कथञ्चन ॥ ०२७ ॥

प्रयोजनं च निर्वृत्तमिह वासे ममार्जुन ।

धार्तराष्ट्रो हतो राजा सबलः सपदानुगः ॥ ०२८ ॥

पृथिवी च वशे तात धर्मपुत्रस्य धीमतः ।
स्थिता समुद्रवसना सशैलवनकानना ॥ ०२९ ॥

चिता रत्नैर्बहुविधैः कुरुराजस्य पाण्डव ॥ ०२९ ॥

धर्मेण राजा धर्मज्ञः पातु सर्वां वसुंधराम् ।
उपास्यमानो बहुभिः सिद्धैश्चापि महात्मभिः ॥ ०३० ॥

स्तूयमानश्च सततं बन्दिभिर्भरतर्षभ ॥ ०३० ॥

तन्मया सह गत्वाद्य राजानं कुरुवर्धनम् ।
आपृच्छ कुरुशार्दूल गमनं द्वारकां प्रति ॥ ०३१ ॥

इदं शरीरं वसु यच्च मे गृहे ; निवेदितं पार्थ सदा युधिष्ठिरे ।
प्रियश्च मान्यश्च हि मे युधिष्ठिरः ; सदा कुरूणामधिपो महामतिः ॥ ०३२ ॥

प्रयोजनं चापि निवासकारणे ; न विद्यते मे त्वदृते महाभुज ।
स्थिता हि पृथ्वी तव पार्थ शासने ; गुरोः सुवृत्तस्य युधिष्ठिरस्य ह ॥ ०३३ ॥

इतीदमुक्तं स तदा महात्मना ; जनार्दनेनामितविक्रमोऽर्जुनः ।
तथेति कृच्छ्रादिव वाचमीरय ;ज्जनार्दनं संप्रतिपूज्य पार्थिव ॥ ०३४ ॥

# अनुगीता

## अध्याय ०१६

जनमेजय उवाच ॥

सभायां वसतोस्तस्यां निहत्यारीन्महात्मनोः ।
केशवार्जुनयोः का नु कथा समभवद्द्विज ॥ ००१ ॥

वैशंपायन उवाच ॥

कृष्णेन सहितः पार्थः स्वराज्यं प्राप्य केवलम् ।
तस्यां सभायां रम्यायां विजहार मुदा युतः ॥ ००२ ॥

ततः कश्चित्सभोद्देशं स्वर्गोद्देशसमं नृप ।
यदृच्छया तौ मुदितौ जग्मतुः स्वजनावृतौ ॥ ००३ ॥

ततः प्रतीतः कृष्णेन सहितः पाण्डवोऽर्जुनः ।
निरीक्ष्य तां सभां रम्यामिदं वचनमब्रवीत् ॥ ००४ ॥

विदितं ते महाबाहो सङ्ग्रामे समुपस्थिते ।
माहात्म्यं देवकीमातस्तच्च ते रूपमैश्वरम् ॥ ००५ ॥

यत्तु तद्भवता प्रोक्तं तदा केशव सौहृदात् ।
तत्सर्वं पुरुषव्याघ्र नष्टं मे नष्टचेतसः ॥ ००६ ॥

मम कौतूहलं त्वस्ति तेष्वर्थेषु पुनः प्रभो ।
भवांश्च द्वारकां गन्ता नचिरादिव माधव ॥ ००७ ॥

एवमुक्तस्ततः कृष्णः फल्गुनं प्रत्यभाषत ।
परिष्वज्य महातेजा वचनं वदतां वरः ॥ ००८ ॥

श्रावितस्त्वं मया गुह्यं ज्ञापितश्च सनातनम् ।
धर्मं स्वरूपिणं पार्थ सर्वलोकांश्च शाश्वतान् ॥ ००९ ॥

अबुद्ध्या यन्न गृह्णीथास्तन्मे सुमहदप्रियम् ।
नूनमश्रद्दधानोऽसि दुर्मेधाश्चासि पाण्डव ॥ ०१० ॥

स हि धर्मः सुपर्याप्तो ब्रह्मणः पदवेदने ।
न शक्यं तन्मया भूयस्तथा वक्तुमशेषतः ॥ ०११ ॥

परं हि ब्रह्म कथितं योगयुक्तेन तन्मया ।
इतिहासं तु वक्ष्यामि तस्मिन्नर्थे पुरातनम् ॥ ०१२ ॥

यथा तां बुद्धिमास्थाय गतिमग्र्यां गमिष्यसि ।
शृणु धर्मभृतां श्रेष्ठ गदतः सर्वमेव मे ॥ ०१३ ॥

आगच्छद्ब्राह्मणः कश्चित्स्वर्गलोकादरिंदम ।
ब्रह्मलोकाच्च दुर्धर्षः सोऽस्माभिः पूजितोऽभवत् ॥ ०१४ ॥

अस्माभिः परिपृष्टश्च यदाह भरतर्षभ ।
दिव्येन विधिना पार्थ तच्छृणुष्वाविचारयन् ॥ ०१५ ॥

ब्राह्मण उवाच ॥

मोक्षधर्मं समाश्रित्य कृष्ण यन्मानुपृच्छसि ।
भूतानामनुकम्पार्थं यन्मोहच्छेदनं प्रभो ॥ ०१६ ॥

तत्तेऽहं संप्रवक्ष्यामि यथावन्मधुसूदन ।
शृणुष्वावहितो भूत्वा गदतो मम माधव ॥ ०१७ ॥

कश्चिद्विप्रस्तपोयुक्तः काश्यपो धर्मवित्तमः ।

आससाद द्विजं कञ्चिद्धर्माणामागतागमम् ॥ ०१८ ॥

गतागते सुबहुशो ज्ञानविज्ञानपारगम् ।
लोकतत्त्वार्थकुशलं ज्ञातारं सुखदुःखयोः ॥ ०१९ ॥

जातीमरणतत्त्वज्ञं कोविदं पुण्यपापयोः ।
द्रष्टारमुच्चनीचानां कर्मभिर्देहिनां गतिम् ॥ ०२० ॥

चरन्तं मुक्तवत्सिद्धं प्रशान्तं संयतेन्द्रियम् ।
दीप्यमानं श्रिया ब्राह्म्या क्रममाणं च सर्वशः ॥ ०२१ ॥

अन्तर्धानगतिज्ञं च श्रुत्वा तत्त्वेन काश्यपः ।
तथैवान्तर्हितैः सिद्धैर्यान्तं चक्रधरैः सह ॥ ०२२ ॥

संभाषमाणमेकान्ते समासीनं च तैः सह ।
यदृच्छया च गच्छन्तमसक्तं पवनं यथा ॥ ०२३ ॥

तं समासाद्य मेधावी स तदा द्विजसत्तमः ।
चरणौ धर्मकामो वै तपस्वी सुसमाहितः ॥ ०२४ ॥

प्रतिपेदे यथान्यायं भक्त्या परमया युतः ॥ ०२४ ॥

विस्मितश्चाद्भुतं दृष्ट्वा काश्यपस्तं द्विजोत्तमम् ।
परिचारेण महता गुरुं वैद्यमतोषयत् ॥ ०२५ ॥

प्रीतात्मा चोपपन्नश्च श्रुतचारित्रसंयुतः ।
भावेन तोषयच्चैनं गुरुवृत्त्या परंतपः ॥ ०२६ ॥

तस्मै तुष्टः स शिष्याय प्रसन्नोऽथाब्रवीद्गुरुः ।
सिद्धिं परामभिप्रेक्ष्य शृणु तन्मे जनार्दन ॥ ०२७ ॥

विविधैः कर्मभिस्तात पुण्ययोगैश्च केवलैः ।
गच्छन्तीह गतिं मर्त्या देवलोकेऽपि च स्थितिम् ॥ ०२८ ॥

न क्वचित्सुखमत्यन्तं न क्वचिच्छाश्वती स्थितिः ।
स्थानाच्च महतो भ्रंशो दुःखलब्धात्पुनः पुनः ॥ ०२९ ॥

अशुभा गतयः प्राप्ताः कष्टा मे पापसेवनात् ।
काममन्युपरीतेन तृष्णया मोहितेन च ॥ ०३० ॥

पुनः पुनश्च मरणं जन्म चैव पुनः पुनः ।
आहारा विविधा भुक्ताः पीता नानाविधाः स्तनाः ॥ ०३१ ॥

मातरो विविधा दृष्टाः पितरश्च पृथग्विधाः ।
सुखानि च विचित्राणि दुःखानि च मयानघ ॥ ०३२ ॥

प्रियैर्विवासो बहुशः संवासश्चाप्रियैः सह ।
धननाशश्च संप्राप्तो लब्ध्वा दुःखेन तद्धनम् ॥ ०३३ ॥

अवमानाः सुकष्टाश्च परतः स्वजनात्तथा ।
शारीरा मानसाश्चापि वेदना भृशदारुणाः ॥ ०३४ ॥

प्राप्ता विमाननाश्चोग्रा वधबन्धाश्च दारुणाः ।
पतनं निरये चैव यातनाश्च यमक्षये ॥ ०३५ ॥

जरा रोगाश्च सततं वासनानि च भूरिशः ।
लोकेऽस्मिन्ननुभूतानि द्वंद्वजानि भृशं मया ॥ ०३६ ॥

ततः कदाचिन्निर्वेदान्निकारान्निकृतेन च ।
लोकतन्त्रं परित्यक्तं दुःखार्तेन भृशं मया ॥ ०३७ ॥

ततः सिद्धिरियं प्राप्ता प्रसादादात्मनो मया ॥ ०३७ ॥

नाहं पुनरिहागन्ता लोकानालोकयाम्यहम् ।
आ सिद्धेरा प्रजासर्गादात्मनो मे गतिः शुभा ॥ ०३८ ॥

उपलब्धा द्विजश्रेष्ठ तथेयं सिद्धिरुत्तमा ।
इतः परं गमिष्यामि ततः परतरं पुनः ॥ ०३९ ॥

ब्रह्मणः पदमव्यग्रं मा ते भूदत्र संशयः ॥ ०३९ ॥

नाहं पुनरिहागन्ता मर्त्यलोकं परंतप ।
प्रीतोऽस्मि ते महाप्राज्ञ ब्रूहि किं करवाणि ते ॥ ०४० ॥

यदीप्सुरुपपन्नस्त्वं तस्य कालोऽयमागतः ।
अभिजाने च तदहं यदर्थं मा त्वमागतः ॥ ०४१ ॥

अचिरात्तु गमिष्यामि येनाहं त्वामचूचुदम् ॥ ०४१ ॥

भृशं प्रीतोऽस्मि भवतश्चारित्रेण विचक्षण ।
परिपृच्छ यावद्भवते भाषेयं यत्तवेप्सितम् ॥ ०४२ ॥

बहु मन्ये च ते बुद्धिं भृशं संपूजयामि च ।
येनाहं भवता बुद्धो मेधावी ह्यसि काश्यप ॥ ०४३ ॥

---

# अध्याय ०१७

वासुदेव उवाच ॥

ततस्तस्योपसङ्गृह्य पादौ प्रश्नान्सुदुर्वचान् ।

पप्रच्छ तांश्च सर्वान्स प्राह धर्मभृतां वरः ॥ ००१ ॥

काश्यप उवाच ॥

कथं शरीरं च्यवते कथं चैवोपपद्यते ।
कथं कष्टाच्च संसारात्संसरन्परिमुच्यते ॥ ००२ ॥

आत्मानं वा कथं युक्त्वा तच्छरीरं विमुञ्चति ।
शरीरतश्च निर्मुक्तः कथमन्यत्प्रपद्यते ॥ ००३ ॥

कथं शुभाशुभे चायं कर्मणी स्वकृते नरः ।
उपभुङ्क्ते क्व वा कर्म विदेहस्योपतिष्ठति ॥ ००४ ॥

ब्राह्मण उवाच ॥

एवं सञ्चोदितः सिद्धः प्रश्नांस्तान्प्रत्यभाषत ।
आनुपूर्व्येण वार्ष्णेय यथा तन्मे वचः शृणु ॥ ००५ ॥

सिद्ध उवाच ॥

आयुःकीर्तिकराणीह यानि कर्माणि सेवते ।
शरीरग्रहणेऽन्यस्मिंस्तेषु क्षीणेषु सर्वशः ॥ ००६ ॥

आयुःक्षयपरीतात्मा विपरीतानि सेवते ।
बुद्धिर्व्यावर्तते चास्य विनाशे प्रत्युपस्थिते ॥ ००७ ॥

सत्त्वं बलं च कालं चाप्यविदित्वात्मनस्तथा ।
अतिवेलमुपाश्नाति तैर्विरुद्धान्यनात्मवान् ॥ ००८ ॥

यदायमतिकष्टानि सर्वाण्युपनिषेवते ।
अत्यर्थमपि वा भुङ्क्ते न वा भुङ्क्ते कदाचन ॥ ००९ ॥

दुष्टान्नं विषमान्नं च सोऽन्योन्येन विरोधि च ।
गुरु वापि समं भुङ्क्ते नातिजीर्णेऽपि वा पुनः ॥ ०१० ॥

व्यायाममतिमात्रं वा व्यवायं चोपसेवते ।
सततं कर्मलोभाद्वा प्राप्तं वेगविधारणम् ॥ ०११ ॥

रसातियुक्तमन्नं वा दिवास्वप्नं निषेवते ।
अपक्वानागते काले स्वयं दोषान्प्रकोपयन् ॥ ०१२ ॥

स्वदोषकोपनाद्रोगं लभते मरणान्तिकम् ।
अथ चोद्बन्धनादीनि परीतानि व्यवस्यति ॥ ०१३ ॥

तस्य तैः कारणैर्जन्तोः शरीराच्च्यवते यथा ।
जीवितं प्रोच्यमानं तद्यथावदुपधारय ॥ ०१४ ॥

ऊष्मा प्रकुपितः काये तीव्रवायुसमीरितः ।
शरीरमनुपर्येति सर्वान्प्राणान्रुणद्धि वै ॥ ०१५ ॥

अत्यर्थं बलवानूष्मा शरीरे परिकोपितः ।
भिनत्ति जीवस्थानानि तानि मर्माणि विद्धि च ॥ ०१६ ॥

ततः सवेदनः सद्यो जीवः प्रच्यवते क्षरन् ।
शरीरं त्यजते जन्तुश्छिद्यमानेषु मर्मसु ॥ ०१७ ॥

वेदनाभिः परीतात्मा तद्विद्धि द्विजसत्तम ॥ ०१७ ॥

जातीमरणसंविग्नाः सततं सर्वजन्तवः ।
दृश्यन्ते संत्यजन्तश्च शरीराणि द्विजर्षभ ॥ ०१८ ॥

गर्भसङ्क्रमणे चापि मर्मणामतिसर्पणे ।

तादृशीमेव लभते वेदनां मानवः पुनः ॥ ०१९ ॥

भिन्नसंधिरथ क्लेदमद्भिः स लभते नरः ।
यथा पञ्चसु भूतेषु संश्रितत्वं निगच्छति ॥ ०२० ॥

शैत्यात्प्रकुपितः काये तीव्रवायुसमीरितः ॥ ०२० ॥

यः स पञ्चसु भूतेषु प्राणापाने व्यवस्थितः ।
स गच्छत्यूर्ध्वगो वायुः कृच्छ्रान्मुक्त्वा शरीरिणम् ॥ ०२१ ॥

शरीरं च जहात्येव निरुच्छ्वासश्च दृश्यते ।
निरूष्मा स निरुच्छ्वासो निःश्रीको गतचेतनः ॥ ०२२ ॥

ब्रह्मणा संपरित्यक्तो मृत इत्युच्यते नरः ।
स्रोतोभिर्यैर्विजानाति इन्द्रियार्थाञ्शरीरभृत् ॥ ०२३ ॥

तैरेव न विजानाति प्राणमाहारसंभवम् ॥ ०२३ ॥

तत्रैव कुरुते काये यः स जीवः सनातनः ।
तेषां यद्यद्भवेद्युक्तं संनिपाते क्वचित्क्वचित् ॥ ०२४ ॥

तत्तन्मर्म विजानीहि शास्त्रदृष्टं हि तत्तथा ॥ ०२४ ॥

तेषु मर्मसु भिन्नेषु ततः स समुदीरयन् ।
आविश्य हृदयं जन्तोः सत्त्वं चाशु रुणद्धि वै ॥ ०२५ ॥

ततः स चेतनो जन्तुर्नाभिजानाति किञ्चन ॥ ०२५ ॥

तमसा संवृतज्ञानः संवृतेष्वथ मर्मसु ।
स जीवो निरधिष्ठानश्चाव्यते मातरिश्वना ॥ ०२६ ॥

ततः स तं महोच्छ्वासं भृशमुच्छ्वस्य दारुणम् ।
निष्क्रामन्कम्पयत्याशु तच्छरीरमचेतनम्  ॥ ०२७  ॥

स जीवः प्रच्युतः कायात्कर्मभिः स्वैः समावृतः ।
अङ्कितः स्वैः शुभैः पुण्यैः पापैर्वाप्युपपद्यते  ॥ ०२८  ॥

ब्राह्मणा ज्ञानसंपन्ना यथावच्छ्रुतनिश्चयाः ।
इतरं कृतपुण्यं वा तं विजानन्ति लक्षणैः  ॥ ०२९  ॥

यथान्धकारे खद्योतं लीयमानं ततस्ततः ।
चक्षुष्मन्तः प्रपश्यन्ति तथा तं ज्ञानचक्षुषः  ॥ ०३०  ॥

पश्यन्त्येवंविधाः सिद्धा जीवं दिव्येन चक्षुषा ।
च्यवन्तं जायमानं च योनिं चानुप्रवेशितम्  ॥ ०३१  ॥

तस्य स्थानानि दृष्टानि त्रिविधानीह शास्त्रतः ।
कर्मभूमिरियं भूमिर्यत्र तिष्ठन्ति जन्तवः  ॥ ०३२  ॥

ततः शुभाशुभं कृत्वा लभन्ते सर्वदेहिनः ।
इहैवोच्चावचान्भोगान्प्राप्नुवन्ति स्वकर्मभिः  ॥ ०३३  ॥

इहैवाशुभकर्मा तु कर्मभिर्निरयं गतः ।
अवाक्स निरये पापो मानवः पच्यते भृशम्  ॥ ०३४  ॥

तस्मात्सुदुर्लभो मोक्ष आत्मा रक्ष्यो भृशं ततः  ॥ ०३४  ॥

ऊर्ध्वं तु जन्तवो गत्वा येषु स्थानेष्ववस्थिताः ।
कीर्त्यमानानि तानीह तत्त्वतः संनिबोध मे  ॥ ०३५  ॥

तच्छ्रुत्वा नैष्ठिकीं बुद्धिं बुध्येथाः कर्मनिश्चयात्  ॥ ०३५  ॥

तारारूपाणि सर्वाणि यच्चैतच्चन्द्रमण्डलम् ।
यच्च विभ्राजते लोके स्वभासा सूर्यमण्डलम्  ॥ ०३६  ॥

स्थानान्येतानि जानीहि नराणां पुण्यकर्मणाम्  ॥ ०३६  ॥

कर्मक्षयाच्च ते सर्वे च्यवन्ते वै पुनः पुनः ।
तत्रापि च विशेषोऽस्ति दिवि नीचोच्चमध्यमः  ॥ ०३७  ॥

न तत्राप्यस्ति संतोषो दृष्ट्वा दीप्ततरां श्रियम् ।
इत्येता गतयः सर्वाः पृथक्त्वे समुदीरिताः  ॥ ०३८  ॥

उपपत्तिं तु गर्भस्य वक्ष्याम्यहमतः परम् ।
यथावत्तां निगदतः शृणुष्वावहितो द्विज  ॥ ०३९  ॥

---

# अध्याय ०१८

ब्राह्मण उवाच  ॥

शुभानामशुभानां च नेह नाशोऽस्ति कर्मणाम् ।
प्राप्य प्राप्य तु पच्यन्ते क्षेत्रं क्षेत्रं तथा तथा  ॥ ००१  ॥

यथा प्रसूयमानस्तु फली दद्यात्फलं बहु ।
तथा स्याद्विपुलं पुण्यं शुद्धेन मनसा कृतम्  ॥ ००२  ॥

पापं चापि तथैव स्यात्पापेन मनसा कृतम् ।
पुरोधाय मनो हीह कर्मण्यात्मा प्रवर्तते  ॥ ००३  ॥

यथा कर्मसमादिष्टं काममन्युसमावृतः ।

नरो गर्भं प्रविशति तच्चापि शृणु चोत्तरम् ॥ ००४ ॥

शुक्रं शोणितसंसृष्टं स्त्रिया गर्भाशयं गतम् ।
क्षेत्रं कर्मजमाप्नोति शुभं वा यदि वाशुभम् ॥ ००५ ॥

सौक्ष्म्यादव्यक्तभावाच्च न स क्वचन सज्जते ।
संप्राप्य ब्रह्मणः कायं तस्मात्तद्ब्रह्म शाश्वतम् ॥ ००६ ॥

तद्बीजं सर्वभूतानां तेन जीवन्ति जन्तवः ॥ ००६ ॥

स जीवः सर्वगात्राणि गर्भस्याविश्य भागशः ।
दधाति चेतसा सद्यः प्राणस्थानेष्ववस्थितः ॥ ००७ ॥

ततः स्पन्दयतेऽङ्गानि स गर्भश्चेतनान्वितः ॥ ००७ ॥

यथा हि लोहनिष्यन्दो निषिक्तो बिम्बविग्रहम् ।
उपैति तद्वज्जानीहि गर्भे जीवप्रवेशनम् ॥ ००८ ॥

लोहपिण्डं यथा वह्निः प्रविशत्यभितापयन् ।
तथा त्वमपि जानीहि गर्भे जीवोपपादनम् ॥ ००९ ॥

यथा च दीपः शरणं दीप्यमानः प्रकाशयेत् ।
एवमेव शरीराणि प्रकाशयति चेतना ॥ ०१० ॥

यद्यच्च कुरुते कर्म शुभं वा यदि वाशुभम् ।
पूर्वदेहकृतं सर्वमवश्यमुपभुज्यते ॥ ०११ ॥

ततस्तत्क्षीयते चैव पुनश्चान्यत्प्रचीयते ।
यावत्तन्मोक्षयोगस्थं धर्मं नैवावबुध्यते ॥ ०१२ ॥

तत्र धर्मं प्रवक्ष्यामि सुखी भवति येन वै ।

आवर्तमानो जातीषु तथान्योन्यासु सत्तम ॥ ०१३ ॥

दानं व्रतं ब्रह्मचर्यं यथोक्तव्रतधारणम् ।
दमः प्रशान्तता चैव भूतानां चानुकम्पनम् ॥ ०१४ ॥

संयमश्चानृशंस्यं च परस्वादानवर्जनम् ।
व्यलीकानामकरणं भूतानां यत्र सा भुवि ॥ ०१५ ॥

मातापित्रोश्च शुश्रूषा देवतातिथिपूजनम् ।
गुरुपूजा घृणा शौचं नित्यमिन्द्रियसंयमः ॥ ०१६ ॥

प्रवर्तनं शुभानां च तत्सतां वृत्तमुच्यते ।
ततो धर्मः प्रभवति यः प्रजाः पाति शाश्वतीः ॥ ०१७ ॥

एवं सत्सु सदा पश्येत्तत्र ह्येषा ध्रुवा स्थितिः ।
आचारो धर्ममाचष्टे यस्मिन्सन्तो व्यवस्थिताः ॥ ०१८ ॥

तेषु तद्धर्मनिक्षिप्तं यः स धर्मः सनातनः ।
यस्तं समभिपद्येत न स दुर्गतिमाप्नुयात् ॥ ०१९ ॥

अतो नियम्यते लोकः प्रमुह्य धर्मवर्त्मसु ।
यस्तु योगी च मुक्तश्च स एतेभ्यो विशिष्यते ॥ ०२० ॥

वर्तमानस्य धर्मेण पुरुषस्य यथा तथा ।
संसारतारणं ह्यस्य कालेन महता भवेत् ॥ ०२१ ॥

एवं पूर्वकृतं कर्म सर्वो जन्तुर्निषेवते ।
सर्वं तत्कारणं येन निकृतोऽयमिहागतः ॥ ०२२ ॥

शरीरग्रहणं चास्य केन पूर्वं प्रकल्पितम् ।
इत्येवं संशयो लोके तच्च वक्ष्याम्यतः परम् ॥ ०२३ ॥

शरीरमात्मनः कृत्वा सर्वभूतपितामहः ।
त्रैलोक्यमसृजद्ब्रह्मा कृत्स्नं स्थावरजङ्गमम् ॥ ०२४ ॥

ततः प्रधानमसृजच्चेतना सा शरीरिणाम् ।
यया सर्वमिदं व्याप्तं यां लोके परमां विदुः ॥ ०२५ ॥

इह तत्क्षरमित्युक्तं परं त्वमृतमक्षरम् ।
त्रयाणां मिथुनं सर्वमेकैकस्य पृथक्पृथक् ॥ ०२६ ॥

असृजत्सर्वभूतानि पूर्वसृष्टः प्रजापतिः ।
स्थावराणि च भूतानि इत्येषा पौर्विकी श्रुतिः ॥ ०२७ ॥

तस्य कालपरीमाणमकरोत्स पितामहः ।
भूतेषु परिवृत्तिं च पुनरावृत्तिमेव च ॥ ०२८ ॥

यथात्र कश्चिन्मेधावी दृष्टात्मा पूर्वजन्मनि ।
यत्प्रवक्ष्यामि तत्सर्वं यथावदुपपद्यते ॥ ०२९ ॥

सुखदुःखे सदा सम्यगनित्ये यः प्रपश्यति ।
कायं चामेध्यसंघातं विनाशं कर्मसंहितम् ॥ ०३० ॥

यच्च किञ्चित्सुखं तच्च सर्वं दुःखमिति स्मरन् ।
संसारसागरं घोरं तरिष्यति सुदुस्तरम् ॥ ०३१ ॥

जातीमरणरोगैश्च समाविष्टः प्रधानवित् ।
चेतनावत्सु चैतन्यं समं भूतेषु पश्यति ॥ ०३२ ॥

निर्विद्यते ततः कृत्स्नं मार्गमाणः परं पदम् ।
तस्योपदेशं वक्ष्यामि याथातथ्येन सत्तम ॥ ०३३ ॥

शाश्वतस्याव्ययस्याथ पदस्य ज्ञानमुत्तमम् ।
प्रोच्यमानं मया विप्र निबोधेदमशेषतः ॥ ०३४ ॥

---

# अध्याय ०१९

ब्राह्मण उवाच ॥

यः स्यादेकायने लीनस्तूष्णीं किञ्चिदचिन्तयन् ।
पूर्वं पूर्वं परित्यज्य स निरारम्भको भवेत् ॥ ००१ ॥

सर्वमित्रः सर्वसहः समरक्तो जितेन्द्रियः ।
व्यपेतभयमन्युश्च कामहा मुच्यते नरः ॥ ००२ ॥

आत्मवत्सर्वभूतेषु यश्चरेन्नियतः शुचिः ।
अमानी निरभीमानः सर्वतो मुक्त एव सः ॥ ००३ ॥

जीवितं मरणं चोभे सुखदुःखे तथैव च ।
लाभालाभे प्रियद्वेष्ये यः समः स च मुच्यते ॥ ००४ ॥

न कस्यचित्स्पृहयते नावजानाति किञ्चन ।
निर्द्वंद्वो वीतरागात्मा सर्वतो मुक्त एव सः ॥ ००५ ॥

अनमित्रोऽथ निर्बन्धुरनपत्यश्च यः क्वचित् ।
त्यक्तधर्मार्थकामश्च निराकाङ्क्षी स मुच्यते ॥ ००६ ॥

नैव धर्मी न चाधर्मी पूर्वोपचितहा च यः ।
धातुक्षयप्रशान्तात्मा निर्द्वंद्वः स विमुच्यते ॥ ००७ ॥

अकर्मा चाविकाङ्क्षश्च पश्यञ्जगदशाश्वतम् ।
अस्वस्थमवशं नित्यं जन्मसंसारमोहितम् ॥ ००८ ॥

वैराग्यबुद्धिः सततं तापदोषव्यपेक्षकः ।
आत्मबन्धविनिर्मोक्षं स करोत्यचिरादिव ॥ ००९ ॥

अगन्धरसमस्पर्शमशब्दमपरिग्रहम् ।
अरूपमनभिज्ञेयं दृष्ट्वात्मानं विमुच्यते ॥ ०१० ॥

पञ्चभूतगुणैर्हीनममूर्तिमदलेपकम् ।
अगुणं गुणभोक्तारं यः पश्यति स मुच्यते ॥ ०११ ॥

विहाय सर्वसङ्कल्पान्बुद्ध्या शारीरमानसान् ।
शनैर्निर्वाणमाप्नोति निरिन्धन इवानलः ॥ ०१२ ॥

विमुक्तः सर्वसंस्कारैस्ततो ब्रह्म सनातनम् ।
परमाप्नोति संशान्तमचलं दिव्यमक्षरम् ॥ ०१३ ॥

अतः परं प्रवक्ष्यामि योगशास्त्रमनुत्तमम् ।
यज्ज्ञात्वा सिद्धमात्मानं लोके पश्यन्ति योगिनः ॥ ०१४ ॥

तस्योपदेशं पश्यामि यथावत्तन्निबोध मे ।
यैर्द्वारैश्चारयन्नित्यं पश्यत्यात्मानमात्मनि ॥ ०१५ ॥

इन्द्रियाणि तु संहृत्य मन आत्मनि धारयेत् ।
तीव्रं तप्त्वा तपः पूर्वं ततो योक्तुमुपक्रमेत् ॥ ०१६ ॥

तपस्वी त्यक्तसङ्कल्पो दम्भाहङ्कारवर्जितः ।
मनीषी मनसा विप्रः पश्यत्यात्मानमात्मनि ॥ ०१७ ॥

स चेच्छक्नोत्ययं साधुर्योक्तुमात्मानमात्मनि ।
तत एकान्तशीलः स पश्यत्यात्मानमात्मनि ॥ ०१८ ॥

संयतः सततं युक्त आत्मवान्विजितेन्द्रियः ।
तथायमात्मनात्मानं साधु युक्तः प्रपश्यति ॥ ०१९ ॥

यथा हि पुरुषः स्वप्ने दृष्ट्वा पश्यत्यसाविति ।
तथारूपमिवात्मानं साधु युक्तः प्रपश्यति ॥ ०२० ॥

इषीकां वा यथा मुञ्जात्कश्चिन्निर्हृत्य दर्शयेत् ।
योगी निष्कृष्टमात्मानं तथा संपश्यते तनौ ॥ ०२१ ॥

मुञ्जं शरीरं तस्याहुरिषीकामात्मनि श्रिताम् ।
एतन्निदर्शनं प्रोक्तं योगविद्भिरनुत्तमम् ॥ ०२२ ॥

यदा हि युक्तमात्मानं सम्यक्पश्यति देहभृत् ।
तदास्य नेशते कश्चित्त्रैलोक्यस्यापि यः प्रभुः ॥ ०२३ ॥

अन्योन्याश्चैव तनवो यथेष्टं प्रतिपद्यते ।
विनिवृत्य जरामृत्यू न हृष्यति न शोचति ॥ ०२४ ॥

देवानामपि देवत्वं युक्तः कारयते वशी ।
ब्रह्म चाव्ययमाप्नोति हित्वा देहमशाश्वतम् ॥ ०२५ ॥

विनश्यत्स्वपि लोकेषु न भयं तस्य जायते ।
क्लिश्यमानेषु भूतेषु न स क्लिश्यति केनचित् ॥ ०२६ ॥

दुःखशोकमयैर्घोरैः सङ्गस्नेहसमुद्भवैः ।
न विचाल्येत युक्तात्मा निःस्पृहः शान्तमानसः ॥ ०२७ ॥

नैनं शस्त्राणि विध्यन्ते न मृत्युश्चास्य विद्यते ।

नातः सुखतरं किञ्चिल्लोके क्वचन विद्यते ॥ ०२८ ॥

सम्यग्युक्त्वा यदात्मानमात्मन्येव प्रपश्यति ।
तदैव न स्पृहयते साक्षादपि शतक्रतोः ॥ ०२९ ॥

निर्वेदस्तु न गन्तव्यो युञ्जानेन कथञ्चन ।
योगमेकान्तशीलस्तु यथा युञ्जीत तच्छृणु ॥ ०३० ॥

दृष्टपूर्वां दिशं चिन्त्य यस्मिन्संनिवसेत्पुरे ।
पुरस्याभ्यन्तरे तस्य मनश्चार्यं न बाह्यतः ॥ ०३१ ॥

पुरस्याभ्यन्तरे तिष्ठन्यस्मिन्नावसथे वसेत् ।
तस्मिन्नावसथे धार्यं सबाह्याभ्यन्तरं मनः ॥ ०३२ ॥

प्रचिन्त्यावसथं कृत्स्नं यस्मिन्कायेऽवतिष्ठते ।
तस्मिन्काये मनश्चार्यं न कथञ्चन बाह्यतः ॥ ०३३ ॥

संनियम्येन्द्रियग्रामं निर्घोषे निर्जने वने ।
कायमभ्यन्तरं कृत्स्नमेकाग्रः परिचिन्तयेत् ॥ ०३४ ॥

दन्तांस्तालु च जिह्वां च गलं ग्रीवां तथैव च ।
हृदयं चिन्तयेच्चापि तथा हृदयबन्धनम् ॥ ०३५ ॥

इत्युक्तः स मया शिष्यो मेधावी मधुसूदन ।
पप्रच्छ पुनरेवेमं मोक्षधर्मं सुदुर्वचम् ॥ ०३६ ॥

भुक्तं भुक्तं कथमिदमन्नं कोष्ठे विपच्यते ।
कथं रसत्वं व्रजति शोणितं जायते कथम् ॥ ०३७ ॥

तथा मांसं च मेदश्च स्नाय्वस्थीनि च पोषति ॥ ०३७ ॥

कथमेतानि सर्वाणि शरीराणि शरीरिणाम् ।
वर्धन्ते वर्धमानस्य वर्धते च कथं बलम्  ॥ ०३८  ॥

निरोजसां निष्क्रमणं मलानां च पृथक्पृथक्  ॥ ०३८  ॥

कुतो वायं प्रश्वसिति उच्छ्वसित्यपि वा पुनः ।
कं च देशमधिष्ठाय तिष्ठत्यात्मायमात्मनि  ॥ ०३९  ॥

जीवः कायं वहति चेच्चेष्टयानः कलेवरम् ।
किंवर्णं कीदृशं चैव निवेशयति वै मनः  ॥ ०४०  ॥

याथातथ्येन भगवन्वक्तुमर्हसि मेऽनघ  ॥ ०४०  ॥

इति संपरिपृष्टोऽहं तेन विप्रेण माधव ।
प्रत्यब्रुवं महाबाहो यथाश्रुतमरिंदम  ॥ ०४१  ॥

यथा स्वकोष्ठे प्रक्षिप्य कोष्ठं भाण्डमना भवेत् ।
तथा स्वकाये प्रक्षिप्य मनो द्वारैरनिश्चलैः  ॥ ०४२  ॥

आत्मानं तत्र मार्गेत प्रमादं परिवर्जयेत्  ॥ ०४२  ॥

एवं सततमुद्युक्तः प्रीतात्मा नचिरादिव ।
आसादयति तद्ब्रह्म यद्दृष्ट्वा स्यात्प्रधानवित्  ॥ ०४३  ॥

न त्वसौ चक्षुषा ग्राह्यो न च सर्वैरपीन्द्रियैः ।
मनसैव प्रदीपेन महानात्मनि दृश्यते  ॥ ०४४  ॥

सर्वतःपाणिपादं तं सर्वतोक्षिशिरोमुखम् ।
जीवो निष्क्रान्तमात्मानं शरीरात्संप्रपश्यति  ॥ ०४५  ॥

स तदुत्सृज्य देहं स्वं धारयन्ब्रह्म केवलम् ।

आत्मानमालोकयति मनसा प्रहसन्निव ॥ ०४६ ॥

इदं सर्वरहस्यं ते मयोक्तं द्विजसत्तम ।
आपृच्छे साधयिष्यामि गच्छ शिष्य यथासुखम् ॥ ०४७ ॥

इत्युक्तः स तदा कृष्ण मया शिष्यो महातपाः ।
अगच्छत यथाकामं ब्राह्मणश्छिन्नसंशयः ॥ ०४८ ॥

वासुदेव उवाच ॥

इत्युक्त्वा स तदा वाक्यं मां पार्थ द्विजपुङ्गवः ।
मोक्षधर्माश्रितः सम्यक्तत्रैवान्तरधीयत ॥ ०४९ ॥

कच्चिदेतत्त्वया पार्थ श्रुतमेकाग्रचेतसा ।
तदापि हि रथस्थस्त्वं श्रुतवानेतदेव हि ॥ ०५० ॥

नैतत्पार्थ सुविज्ञेयं व्यामिश्रेणेति मे मतिः ।
नरेणाकृतसञ्ज्ञेन विदग्धेनाकृतात्मना ॥ ०५१ ॥

सुरहस्यमिदं प्रोक्तं देवानां भरतर्षभ ।
कच्चिन्नेदं श्रुतं पार्थ मर्त्येनान्येन केनचित् ॥ ०५२ ॥

न ह्येतच्छ्रोतुमर्होऽन्यो मनुष्यस्त्वामृतेऽनघ ।
नैतदद्य सुविज्ञेयं व्यामिश्रेणान्तरात्मना ॥ ०५३ ॥

क्रियावद्भिर्हि कौन्तेय देवलोकः समावृतः ।
न चैतदिष्टं देवानां मर्त्यै रूपनिवर्तनम् ॥ ०५४ ॥

परा हि सा गतिः पार्थ यत्तद्ब्रह्म सनातनम् ।
यत्रामृतत्वं प्राप्नोति त्यक्त्वा दुःखं सदा सुखी ॥ ०५५ ॥

एवं हि धर्ममास्थाय येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥ ०५६ ॥

किं पुनर्ब्राह्मणाः पार्थ क्षत्रिया वा बहुश्रुताः ।
स्वधर्मरतयो नित्यं ब्रह्मलोकपरायणाः ॥ ०५७ ॥

हेतुमच्चैतदुद्दिष्टमुपायाश्चास्य साधने ।
सिद्धेः फलं च मोक्षश्च दुःखस्य च विनिर्णयः ॥ ०५८ ॥

अतः परं सुखं त्वन्यत्किं नु स्याद्भरतर्षभ ॥ ०५८ ॥

श्रुतवाञ्श्रद्दधानश्च पराक्रान्तश्च पाण्डव ।
यः परित्यजते मर्त्यो लोकतन्त्रमसारवत् ॥ ०५९ ॥

एतैरुपायैः स क्षिप्रं परां गतिमवाप्नुयात् ॥ ०५९ ॥

एतावदेव वक्तव्यं नातो भूयोऽस्ति किञ्चन ।
षण्मासान्नित्ययुक्तस्य योगः पार्थ प्रवर्तते ॥ ०६० ॥

---

# अध्याय ०२०

वासुदेव उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
दंपत्योः पार्थ संवादमभयं नाम नामतः ॥ ००१ ॥

ब्राह्मणी ब्राह्मणं कञ्चिज्ज्ञानविज्ञानपारगम् ।

दृष्ट्वा विविक्त आसीनं भार्या भर्तारमब्रवीत् ॥ ००२ ॥

कं नु लोकं गमिष्यामि त्वामहं पतिमाश्रिता ।
न्यस्तकर्माणमासीनं कीनाशमविचक्षणम् ॥ ००३ ॥

भार्याः पतिकृता.ण्ल्लोकानाप्नुवन्तीति नः श्रुतम् ।
त्वामहं पतिमासाद्य कां गमिष्यामि वै गतिम् ॥ ००४ ॥

एवमुक्तः स शान्तात्मा तामुवाच हसन्निव ।
सुभगे नाभ्यसूयामि वाक्यस्यास्य तवानघे ॥ ००५ ॥

ग्राह्यं दृश्यं च श्राव्यं च यदिदं कर्म विद्यते ।
एतदेव व्यवस्यन्ति कर्म कर्मेति कर्मिणः ॥ ००६ ॥

मोहमेव नियच्छन्ति कर्मणा ज्ञानवर्जिताः ।
नैष्कर्म्यं न च लोकेऽस्मिन्मौर्तमित्युपलभ्यते ॥ ००७ ॥

कर्मणा मनसा वाचा शुभं वा यदि वाशुभम् ।
जन्मादिमूर्तिभेदानां कर्म भूतेषु वर्तते ॥ ००८ ॥

रक्षोभिर्वध्यमानेषु दृश्यद्रव्येषु कर्मसु ।
आत्मस्थमात्मना तेन दृष्टमायतनं मया ॥ ००९ ॥

यत्र तद्ब्रह्म निर्द्वंद्वं यत्र सोमः सहाग्निना ।
व्यवायं कुरुते नित्यं धीरो भूतानि धारयन् ॥ ०१० ॥

यत्र ब्रह्मादयो युक्तास्तदक्षरमुपासते ।
विद्वांसः सुव्रता यत्र शान्तात्मानो जितेन्द्रियाः ॥ ०११ ॥

घ्राणेन न तदाघ्रेयं न तदाद्यं च जिह्वया ।
स्पर्शेन च न तत्स्पृश्यं मनसा त्वेव गम्यते ॥ ०१२ ॥

चक्षुषा न विषह्यं च यत्किञ्चिच्छ्रवणात्परम् ।
अगन्धमरसस्पर्शमरूपाशब्दमव्ययम्  ॥ ०१३  ॥

यतः प्रवर्तते तन्त्रं यत्र च प्रतितिष्ठति ।
प्राणोऽपानः समानश्च व्यानश्चोदान एव च  ॥ ०१४  ॥

तत एव प्रवर्तन्ते तमेव प्रविशन्ति च ।
समानव्यानयोर्मध्ये प्राणापानौ विचेरतुः  ॥ ०१५  ॥

तस्मिन्सुप्ते प्रलीयेते समानो व्यान एव च ।
अपानप्राणयोर्मध्ये उदानो व्याप्य तिष्ठति  ॥ ०१६  ॥

तस्माच्छयानं पुरुषं प्राणापानौ न मुञ्चतः  ॥ ०१६  ॥

प्राणानायम्यते येन तमुदानं प्रचक्षते ।
तस्मात्तपो व्यवस्यन्ति तद्भवं ब्रह्मवादिनः  ॥ ०१७  ॥

तेषामन्योन्यभक्षाणां सर्वेषां देहचारिणाम् ।
अग्निर्वैश्वानरो मध्ये सप्तधा विहितोऽन्तरा  ॥ ०१८  ॥

घ्राणं जिह्वा च चक्षुश्च त्वक्च श्रोत्रं च पञ्चमम् ।
मनो बुद्धिश्च सप्तैता जिह्वा वैश्वानरार्चिषः  ॥ ०१९  ॥

घ्रेयं पेयं च दृश्यं च स्पृश्यं श्रव्यं तथैव च ।
मन्तव्यमथ बोद्धव्यं ताः सप्त समिधो मम  ॥ ०२०  ॥

घ्राता भक्षयिता द्रष्टा स्प्रष्टा श्रोता च पञ्चमः ।
मन्ता बोद्धा च सप्तैते भवन्ति परमर्त्विजः  ॥ ०२१  ॥

घ्रेये पेये च दृश्ये च स्पृश्ये श्रव्ये तथैव च ।

हवींष्यग्निषु होतारः सप्तधा सप्त सप्तसु ॥ ०२२ ॥

सम्यक्प्रक्षिप्य विद्वांसो जनयन्ति स्वयोनिषु ॥ ०२२ ॥

पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ।
मनो बुद्धिश्च सप्तैते योनिरित्येव शब्दिताः ॥ ०२३ ॥

हविर्भूता गुणाः सर्वे प्रविशन्त्यग्निजं मुखम् ।
अन्तर्वासमुषित्वा च जायन्ते स्वासु योनिषु ॥ ०२४ ॥

तत्रैव च निरुध्यन्ते प्रलये भूतभावने ॥ ०२४ ॥

ततः सञ्जायते गन्धस्ततः सञ्जायते रसः ।
ततः सञ्जायते रूपं ततः स्पर्शोऽभिजायते ॥ ०२५ ॥

ततः सञ्जायते शब्दः संशयस्तत्र जायते ।
ततः सञ्जायते निष्ठा जन्मैतत्सप्तधा विदुः ॥ ०२६ ॥

अनेनैव प्रकारेण प्रगृहीतं पुरातनैः ।
पूर्णाहुतिभिरापूर्णास्तेऽभिपूर्यन्ति तेजसा ॥ ०२७ ॥

---

# अध्याय ०२१

ब्राह्मण उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
निबोध दशहोतॄणां विधानमिह यादृशम् ॥ ००१ ॥

सर्वमेवात्र विज्ञेयं चित्तं ज्ञानमवेक्षते ।
रेतः शरीरभृत्काये विज्ञाता तु शरीरभृत् ॥ ००२ ॥

शरीरभृद्गार्हपत्यस्तस्मादन्यः प्रणीयते ।
ततश्चाहवनीयस्तु तस्मिन्सङ्क्षिप्यते हविः ॥ ००३ ॥

ततो वाचस्पतिर्जज्ञे समानः पर्यवेक्षते ।
रूपं भवति वै व्यक्तं तदनुद्रवते मनः ॥ ००४ ॥

ब्राह्मण्युवाच ॥

कस्माद्वागभवत्पूर्वं कस्मात्पश्चान्मनोऽभवत् ।
मनसा चिन्तितं वाक्यं यदा समभिपद्यते ॥ ००५ ॥

केन विज्ञानयोगेन मतिश्चित्तं समास्थिता ।
समुन्नीता नाध्यगच्छत्को वैनां प्रतिषेधति ॥ ००६ ॥

ब्राह्मण उवाच ॥

तामपानः पतिर्भूत्वा तस्मात्प्रेष्यत्यपानताम् ।
तां मतिं मनसः प्राहुर्मनस्तस्मादवेक्षते ॥ ००७ ॥

प्रश्नं तु वाङ्मनसोर्मां यस्मात्त्वमनुपृच्छसि ।
तस्मात्ते वर्तयिष्यामि तयोरेव समाह्वयम् ॥ ००८ ॥

उभे वाङ्मनसी गत्वा भूतात्मानमपृच्छताम् ।
आवयोः श्रेष्ठमाचक्ष्व छिन्धि नौ संशयं विभो ॥ ००९ ॥

मन इत्येव भगवांस्तदा प्राह सरस्वतीम् ।
अहं वै कामधुक्तुभ्यमिति तं प्राह वागथ ॥ ०१० ॥

स्थावरं जङ्गमं चैव विद्ध्युभे मनसी मम ।
स्थावरं मत्सकाशे वै जङ्गमं विषये तव ॥ ०११ ॥

यस्तु ते विषयं गच्छेन्मन्त्रो वर्णः स्वरोऽपि वा ।
तन्मनो जङ्गमं नाम तस्मादसि गरीयसी ॥ ०१२ ॥

यस्मादसि च मा वोचः स्वयमभ्येत्य शोभने ।
तस्मादुच्छ्वासमासाद्य न वक्ष्यसि सरस्वति ॥ ०१३ ॥

प्राणापानान्तरे देवी वाग्वै नित्यं स्म तिष्ठति ।
प्रेर्यमाणा महाभागे विना प्राणमपानती ॥ ०१४ ॥

प्रजापतिमुपाधावत्प्रसीद भगवन्निति ॥ ०१४ ॥

ततः प्राणः प्रादुरभूद्वाचमाप्याययन्पुनः ।
तस्मादुच्छ्वासमासाद्य न वाग्वदति कर्हिचित् ॥ ०१५ ॥

घोषिणी जातनिर्घोषा नित्यमेव प्रवर्तते ।
तयोरपि च घोषिण्योर्निर्घोषैव गरीयसी ॥ ०१६ ॥

गौरिव प्रस्रवत्येषा रसमुत्तमशालिनी ।
सततं स्यन्दते ह्येषा शाश्वतं ब्रह्मवादिनी ॥ ०१७ ॥

दिव्यादिव्यप्रभावेन भारती गौः शुचिस्मिते ।
एतयोरन्तरं पश्य सूक्ष्मयोः स्यन्दमानयोः ॥ ०१८ ॥

अनुत्पन्नेषु वाक्येषु चोद्यमाना सिसृक्षया ।
किं नु पूर्वं ततो देवी व्याजहार सरस्वती ॥ ०१९ ॥

प्राणेन या संभवते शरीरे ; प्राणादपानं प्रतिपद्यते च ।
उदानभूता च विसृज्य देहं ; व्यानेन सर्वं दिवमावृणोति ॥ ०२० ॥

ततः समाने प्रतितिष्ठतीह ; इत्येव पूर्वं प्रजजल्प चापि ।
तस्मान्मनः स्थावरत्वाद्विशिष्टं ; तथा देवी जङ्गमत्वाद्विशिष्टा ॥ ०२१ ॥

---

# अध्याय ०२२

ब्राह्मण उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
सुभगे सप्तहोतॄणां विधानमिह यादृशम् ॥ ००१ ॥

घ्राणं चक्षुश्च जिह्वा च त्वक्श्रोत्रं चैव पञ्चमम् ।
मनो बुद्धिश्च सप्तैते होतारः पृथगाश्रिताः ॥ ००२ ॥

सूक्ष्मेऽवकाशे सन्तस्ते न पश्यन्तीतरेतरम् ।
एतान्वै सप्तहोतॄंस्त्वं स्वभावाद्विद्धि शोभने ॥ ००३ ॥

ब्राह्मण्युवाच ॥

सूक्ष्मेऽवकाशे सन्तस्ते कथं नान्योन्यदर्शिनः ।
कथंस्वभावा भगवन्नेतदाचक्ष्व मे विभो ॥ ००४ ॥

ब्राह्मण उवाच ॥

गुणाज्ञानमविज्ञानं गुणिज्ञानमभिज्ञता ।
परस्परगुणानेते न विजानन्ति कर्हिचित् ॥ ००५ ॥

जिह्वा चक्षुस्तथा श्रोत्रं त्वङ्मनो बुद्धिरेव च ।

न गन्धानधिगच्छन्ति घ्राणस्तानधिगच्छति ॥ ००६ ॥

घ्राणं चक्षुस्तथा श्रोत्रं त्वङ्मनो बुद्धिरेव च ।
न रसानधिगच्छन्ति जिह्वा तानधिगच्छति ॥ ००७ ॥

घ्राणं जिह्वा तथा श्रोत्रं त्वङ्मनो बुद्धिरेव च ।
न रूपाण्यधिगच्छन्ति चक्षुस्तान्यधिगच्छति ॥ ००८ ॥

घ्राणं जिह्वा च चक्षुश्च श्रोत्रं बुद्धिर्मनस्तथा ।
न स्पर्शानधिगच्छन्ति त्वक्च तानधिगच्छति ॥ ००९ ॥

घ्राणं जिह्वा च चक्षुश्च त्वङ्मनो बुद्धिरेव च ।
न शब्दानधिगच्छन्ति श्रोत्रं तानधिगच्छति ॥ ०१० ॥

घ्राणं जिह्वा च चक्षुश्च त्वक्श्रोत्रं बुद्धिरेव च ।
संशयान्नाधिगच्छन्ति मनस्तानधिगच्छति ॥ ०११ ॥

घ्राणं जिह्वा च चक्षुश्च त्वक्श्रोत्रं मन एव च ।
न निष्ठामधिगच्छन्ति बुद्धिस्तामधिगच्छति ॥ ०१२ ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
इन्द्रियाणां च संवादं मनसश्चैव भामिनि ॥ ०१३ ॥

मन उवाच ॥

न घ्राति मामृते घ्राणं रसं जिह्वा न बुध्यते ।
रूपं चक्षुर्न गृह्णाति त्वक्स्पर्शं नावबुध्यते ॥ ०१४ ॥

न श्रोत्रं बुध्यते शब्दं मया हीनं कथञ्चन ।
प्रवरं सर्वभूतानामहमस्मि सनातनम् ॥ ०१५ ॥

अगाराणीव शून्यानि शान्तार्चिष इवाग्नयः ।
इन्द्रियाणि न भासन्ते मया हीनानि नित्यशः ॥ ०१६ ॥

काष्ठानीवार्द्रशुष्काणि यतमानैरपीन्द्रियैः ।
गुणार्थान्नाधिगच्छन्ति मामृते सर्वजन्तवः ॥ ०१७ ॥

इन्द्रियाण्यूचुः ॥

एवमेतद्भवेत्सत्यं यथैतन्मन्यते भवान् ।
ऋतेऽस्मानस्मदर्थांस्तु भोगान्भुङ्क्ते भवान्यदि ॥ ०१८ ॥

यद्यस्मासु प्रलीनेषु तर्पणं प्राणधारणम् ।
भोगान्भुङ्क्ष्व रसान्भुङ्क्ष्व यथैतन्मन्यते तथा ॥ ०१९ ॥

अथ वास्मासु लीनेषु तिष्ठत्सु विषयेषु च ।
यदि सङ्कल्पमात्रेण भुङ्क्ते भोगान्यथार्थवत् ॥ ०२० ॥

अथ चेन्मन्यसे सिद्धिमस्मदर्थेषु नित्यदा ।
घ्राणेन रूपमादत्स्व रसमादत्स्व चक्षुषा ॥ ०२१ ॥

श्रोत्रेण गन्धमादत्स्व निष्ठामादत्स्व जिह्वया ।
त्वचा च शब्दमादत्स्व बुद्ध्या स्पर्शमथापि च ॥ ०२२ ॥

बलवन्तो ह्यनियमा नियमा दुर्बलीयसाम् ।
भोगानपूर्वानादत्स्व नोच्छिष्टं भोक्तुमर्हसि ॥ ०२३ ॥

यथा हि शिष्यः शास्तारं श्रुत्यर्थमभिधावति ।
ततः श्रुतमुपादाय श्रुतार्थमुपतिष्ठति ॥ ०२४ ॥

विषयानेवमस्माभिर्दर्शितानभिमन्यसे ।
अनागतानतीतांश्च स्वप्ने जागरणे तथा ॥ ०२५ ॥

वैमनस्यं गतानां च जन्तूनामल्पचेतसाम् ।
अस्मदर्थे कृते कार्ये दृश्यते प्राणधारणम्  ॥ ०२६  ॥

बहूनपि हि सङ्कल्पान्मत्वा स्वप्नानुपास्य च ।
बुभुक्षया पीड्यमानो विषयानेव धावसि  ॥ ०२७  ॥

अगारमद्वारमिव प्रविश्य ; सङ्कल्पभोगो विषयानविन्दन् ।
प्राणक्षये शान्तिमुपैति नित्यं ; दारुक्षयेऽग्निर्ज्वलितो यथैव  ॥ ०२८  ॥

कामं तु नः स्वेषु गुणेषु सङ्गः ; कामं च नान्योन्यगुणोपलब्धिः ।
अस्मानृते नास्ति तवोपलब्धि ;स्त्वामप्यृतेऽस्मान्न भजेत हर्षः  ॥ ०२९  ॥

---

# अध्याय ०२३

ब्राह्मण उवाच  ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
सुभगे पञ्चहोतॄणां विधानमिह यादृशम्  ॥ ००१  ॥

प्राणापानावुदानश्च समानो व्यान एव च ।
पञ्चहोतॄनथैतान्वै परं भावं विदुर्बुधाः  ॥ ००२  ॥

ब्राह्मण्युवाच  ॥

स्वभावात्सप्त होतार इति ते पूर्विका मतिः ।
यथा वै पञ्च होतारः परो भावस्तथोच्यताम्  ॥ ००३  ॥

ब्राह्मण उवाच ॥

प्राणेन संभृतो वायुरपानो जायते ततः ।
अपाने संभृतो वायुस्ततो व्यानः प्रवर्तते ॥ ००४ ॥

व्यानेन संभृतो वायुस्ततोदानः प्रवर्तते ।
उदाने संभृतो वायुः समानः संप्रवर्तते ॥ ००५ ॥

तेऽपृच्छन्त पुरा गत्वा पूर्वजातं प्रजापतिम् ।
यो नो ज्येष्ठस्तमाचक्ष्व स नः श्रेष्ठो भविष्यति ॥ ००६ ॥

ब्रह्मोवाच ॥

यस्मिन्प्रलीने प्रलयं व्रजन्ति ; सर्वे प्राणाः प्राणभृतां शरीरे ।
यस्मिन्प्रचीर्णे च पुनश्चरन्ति ; स वै श्रेष्ठो गच्छत यत्र कामः ॥ ००७ ॥

प्राण उवाच ॥

मयि प्रलीने प्रलयं व्रजन्ति ; सर्वे प्राणाः प्राणभृतां शरीरे ।
मयि प्रचीर्णे च पुनश्चरन्ति ; श्रेष्ठो ह्यहं पश्यत मां प्रलीनम् ॥ ००८ ॥

ब्राह्मण उवाच ॥

प्राणः प्रलीयत ततः पुनश्च प्रचचार ह ।
समानश्चाप्युदानश्च वचोऽब्रूतां ततः शुभे ॥ ००९ ॥

न त्वं सर्वमिदं व्याप्य तिष्ठसीह यथा वयम् ।
न त्वं श्रेष्ठोऽसि नः प्राण अपानो हि वशे तव ॥ ०१० ॥

प्रचचार पुनः प्राणस्तमपानोऽभ्यभाषत ॥ ०१० ॥

मयि प्रलीने प्रलयं व्रजन्ति ; सर्वे प्राणाः प्राणभृतां शरीरे ।
मयि प्रचीर्णे च पुनश्चरन्ति ; श्रेष्ठो ह्यहं पश्यत मां प्रलीनम्  ॥ ०११  ॥

व्यानश्च तमुदानश्च भाषमाणमथोचतुः ।
अपान न त्वं श्रेष्ठोऽसि प्राणो हि वशगस्तव  ॥ ०१२  ॥

अपानः प्रचचाराथ व्यानस्तं पुनरब्रवीत् ।
श्रेष्ठोऽहमस्मि सर्वेषां श्रूयतां येन हेतुना  ॥ ०१३  ॥

मयि प्रलीने प्रलयं व्रजन्ति ; सर्वे प्राणाः प्राणभृतां शरीरे ।
मयि प्रचीर्णे च पुनश्चरन्ति ; श्रेष्ठो ह्यहं पश्यत मां प्रलीनम्  ॥ ०१४  ॥

प्रालीयत ततो व्यानः पुनश्च प्रचचार ह ।
प्राणापानावुदानश्च समानश्च तमब्रुवन्  ॥ ०१५  ॥

न त्वं श्रेष्ठोऽसि नो व्यान समानो हि वशे तव  ॥ ०१५  ॥

प्रचचार पुनर्व्यानः समानः पुनरब्रवीत् ।
श्रेष्ठोऽहमस्मि सर्वेषां श्रूयतां येन हेतुना  ॥ ०१६  ॥

मयि प्रलीने प्रलयं व्रजन्ति ; सर्वे प्राणाः प्राणभृतां शरीरे ।
मयि प्रचीर्णे च पुनश्चरन्ति ; श्रेष्ठो ह्यहं पश्यत मां प्रलीनम्  ॥ ०१७  ॥

ततः समानः प्रालिल्ये पुनश्च प्रचचार ह ।
प्राणापानावुदानश्च व्यानश्चैव तमब्रुवन्  ॥ ०१८  ॥

समान न त्वं श्रेष्ठोऽसि व्यान एव वशे तव  ॥ ०१८  ॥

समानः प्रचचाराथ उदानस्तमुवाच ह ।
श्रेष्ठोऽहमस्मि सर्वेषां श्रूयतां येन हेतुना  ॥ ०१९  ॥

मयि प्रलीने प्रलयं व्रजन्ति ; सर्वे प्राणाः प्राणभृतां शरीरे ।
मयि प्रचीर्णे च पुनश्चरन्ति ; श्रेष्ठो ह्यहं पश्यत मां प्रलीनम् ॥ ०२० ॥

ततः प्रालीयतोदानः पुनश्च प्रचचार ह ।
प्राणापानौ समानश्च व्यानश्चैव तमब्रुवन् ॥ ०२१ ॥

उदान न त्वं श्रेष्ठोऽसि व्यान एव वशे तव ॥ ०२१ ॥

ततस्तानब्रवीद्ब्रह्मा समवेतान्प्रजापतिः ।
सर्वे श्रेष्ठा न वा श्रेष्ठाः सर्वे चान्योन्यधर्मिणः ॥ ०२२ ॥

सर्वे स्वविषये श्रेष्ठाः सर्वे चान्योन्यरक्षिणः ॥ ०२२ ॥

एकः स्थिरश्चास्थिरश्च विशेषात्पञ्च वायवः ।
एक एव ममैवात्मा बहुधाप्युपचीयते ॥ ०२३ ॥

परस्परस्य सुहृदो भावयन्तः परस्परम् ।
स्वस्ति व्रजत भद्रं वो धारयध्वं परस्परम् ॥ ०२४ ॥

---

# अध्याय ०२४

ब्राह्मण उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
नारदस्य च संवादमृषेर्देवमतस्य च ॥ ००१ ॥

देवमत उवाच ॥

जन्तोः सञ्जायमानस्य किं नु पूर्वं प्रवर्तते ।
प्राणोऽपानः समानो वा व्यानो वोदान एव च ॥ ००२ ॥

नारद उवाच ॥

येनायं सृज्यते जन्तुस्ततोऽन्यः पूर्वमेति तम् ।
प्राणद्वंद्वं च विज्ञेयं तिर्यगं चोर्ध्वगं च यत् ॥ ००३ ॥

देवमत उवाच ॥

केनायं सृज्यते जन्तुः कश्चान्यः पूर्वमेति तम् ।
प्राणद्वंद्वं च मे ब्रूहि तिर्यगूर्ध्वं च निश्चयात् ॥ ००४ ॥

नारद उवाच ॥

सङ्कल्पाज्जायते हर्षः शब्दादपि च जायते ।
रसात्सञ्जायते चापि रूपादपि च जायते ॥ ००५ ॥

स्पर्शात्सञ्जायते चापि गन्धादपि च जायते ।
एतद्रूपमुदानस्य हर्षो मिथुनसंभवः ॥ ००६ ॥

कामात्सञ्जायते शुक्रं कामात्सञ्जायते रसः ।
समानव्यानजनिते सामान्ये शुक्रशोणिते ॥ ००७ ॥

शुक्राच्छोणितसंसृष्टात्पूर्वं प्राणः प्रवर्तते ।
प्राणेन विकृते शुक्रे ततोऽपानः प्रवर्तते ॥ ००८ ॥

प्राणापानाविदं द्वंद्वमवाक्चोर्ध्वं च गच्छतः ।
व्यानः समानश्चैवोभौ तिर्यग्द्वंद्वत्वमुच्यते ॥ ००९ ॥

अग्निर्वै देवताः सर्वा इति वेदस्य शासनम् ।

सञ्जायते ब्राह्मणेषु ज्ञानं बुद्धिसमन्वितम्  ॥ ०१०  ॥

तस्य धूमस्तमोरूपं रजो भस्म सुरेतसः ।
सत्त्वं सञ्जायते तस्य यत्र प्रक्षिप्यते हविः  ॥ ०११  ॥

आघारौ समानो व्यानश्च इति यज्ञविदो विदुः ।
प्राणापानावाज्यभागौ तयोर्मध्ये हुताशनः  ॥ ०१२  ॥

एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः  ॥ ०१२  ॥

निर्द्वंद्वमिति यत्त्वेतत्तन्मे निगदतः शृणु ।
अहोरात्रमिदं द्वंद्वं तयोर्मध्ये हुताशनः ।
एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः  ॥ ०१४  ॥

उभे चैवायने द्वंद्वं तयोर्मध्ये हुताशनः ।
एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः  ॥ ०१५  ॥

उभे सत्यानृते द्वंद्वं तयोर्मध्ये हुताशनः ।
एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः  ॥ ०१६  ॥

उभे शुभाशुभे द्वंद्वं तयोर्मध्ये हुताशनः ।
एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः  ॥ ०१७  ॥

सच्चासच्चैव तद्द्वंद्वं तयोर्मध्ये हुताशनः ।
एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः  ॥ ०१८  ॥

प्रथमं समानो व्यानो व्यस्यते कर्म तेन तत् ।
तृतीयं तु समानेन पुनरेव व्यवस्यते  ॥ ०१९  ॥

शान्त्यर्थं वामदेवं च शान्तिर्ब्रह्म सनातनम् ।
एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः  ॥ ०२०  ॥

# अध्याय ०२५

ब्राह्मण उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
चातुर्होत्रविधानस्य विधानमिह यादृशम् ॥ ००१ ॥

तस्य सर्वस्य विधिवद्विधानमुपदेक्ष्यते ।
शृणु मे गदतो भद्रे रहस्यमिदमुत्तमम् ॥ ००२ ॥

करणं कर्म कर्ता च मोक्ष इत्येव भामिनि ।
चत्वार एते होतारो यैरिदं जगदावृतम् ॥ ००३ ॥

होतॄणां साधनं चैव शृणु सर्वमशेषतः ।
घ्राणं जिह्वा च चक्षुश्च त्वक्च श्रोत्रं च पञ्चमम् ॥ ००४ ॥

मनो बुद्धिश्च सप्तैते विज्ञेया गुणहेतवः ॥ ००४ ॥

गन्धो रसश्च रूपं च शब्दः स्पर्शश्च पञ्चमः ।
मन्तव्यमथ बोद्धव्यं सप्तैते कर्महेतवः ॥ ००५ ॥

घ्राता भक्षयिता द्रष्टा स्प्रष्टा श्रोता च पञ्चमः ।
मन्ता बोद्धा च सप्तैते विज्ञेयाः कर्तृहेतवः ॥ ००६ ॥

स्वगुणं भक्षयन्त्येते गुणवन्तः शुभाशुभम् ।
अहं च निर्गुणोऽत्रेति सप्तैते मोक्षहेतवः ॥ ००७ ॥

विदुषां बुध्यमानानां स्वं स्वं स्थानं यथाविधि ।
गुणास्ते देवताभूताः सततं भुञ्जते हविः ॥ ००८ ॥

अदन्ह्यविद्वानन्नानि ममत्वेनोपपद्यते ।
आत्मार्थं पाचयन्नित्यं ममत्वेनोपहन्यते ॥ ००९ ॥

अभक्ष्यभक्षणं चैव मद्यपानं च हन्ति तम् ।
स चान्नं हन्ति तच्चान्नं स हत्वा हन्यते बुधः ॥ ०१० ॥

अत्ता ह्यन्नमिदं विद्वान्पुनर्जनयतीश्वरः ।
स चान्नाज्जायते तस्मिन्सूक्ष्मो नाम व्यतिक्रमः ॥ ०११ ॥

मनसा गम्यते यच्च यच्च वाचा निरुद्यते ।
श्रोत्रेण श्रूयते यच्च चक्षुषा यच्च दृश्यते ॥ ०१२ ॥

स्पर्शेन स्पृश्यते यच्च घ्राणेन घ्रायते च यत् ।
मनःषष्ठानि संयम्य हवींष्येतानि सर्वशः ॥ ०१३ ॥

गुणवत्पावको मह्यं दीप्यते हव्यवाहनः ।
योगयज्ञः प्रवृत्तो मे ज्ञानब्रह्ममनोद्भवः ॥ ०१४ ॥

प्राणस्तोत्रोऽपानशस्त्रः सर्वत्यागसुदक्षिणः ॥ ०१४ ॥

कर्मानुमन्ता ब्रह्मा मे कर्ताध्वर्युः कृतस्तुतिः ।
कृतप्रशास्ता तच्छास्त्रमपवर्गोऽस्य दक्षिणा ॥ ०१५ ॥

ऋचश्चाप्यत्र शंसन्ति नारायणविदो जनाः ।
नारायणाय देवाय यदबध्नन्पशून्पुरा ॥ ०१६ ॥

तत्र सामानि गायन्ति तानि चाहुर्निदर्शनम् ।
देवं नारायणं भीरु सर्वात्मानं निबोध मे ॥ ०१७ ॥

# अध्याय ०२६

ब्राह्मण उवाच ॥

एकः शास्ता न द्वितीयोऽस्ति शास्ता ; यथा नियुक्तोऽस्मि तथा चरामि ।
हृद्येष तिष्ठन्पुरुषः शास्ति शास्ता ; तेनैव युक्तः प्रवणादिवोदकम् ॥ ००१ ॥

एको गुरुर्नास्ति ततो द्वितीयो ; यो हृच्छयस्तमहमनुब्रवीमि ।
तेनानुशिष्टा गुरुणा सदैव ; पराभूता दानवाः सर्व एव ॥ ००२ ॥

एको बन्धुर्नास्ति ततो द्वितीयो ; यो हृच्छयस्तमहमनुब्रवीमि ।
तेनानुशिष्टा बान्धवा बन्धुमन्तः ; सप्तर्षयः सप्त दिवि प्रभान्ति ॥ ००३ ॥

एकः श्रोता नास्ति ततो द्वितीयो ; यो हृच्छयस्तमहमनुब्रवीमि ।
तस्मिन्गुरौ गुरुवासं निरुष्य ; शक्रो गतः सर्वलोकामरत्वम् ॥ ००४ ॥

एको द्वेष्टा नास्ति ततो द्वितीयो ; यो हृच्छयस्तमहमनुब्रवीमि ।
तेनानुशिष्टा गुरुणा सदैव ; लोकद्विष्टाः पन्नगाः सर्व एव ॥ ००५ ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
प्रजापतौ पन्नगानां देवर्षीणां च संविदम् ॥ ००६ ॥

देवर्षयश्च नागाश्च असुराश्च प्रजापतिम् ।
पर्यपृच्छन्नुपासीनाः श्रेयो नः प्रोच्यतामिति ॥ ००७ ॥

तेषां प्रोवाच भगवाञ्श्रेयः समनुपृच्छताम् ।

ओमित्येकाक्षरं ब्रह्म ते श्रुत्वा प्राद्रवन्दिशः ॥ ००८ ॥

तेषां प्राद्रवमाणानामुपदेशार्थमात्मनः ।
सर्पाणां दशने भावः प्रवृत्तः पूर्वमेव तु ॥ ००९ ॥

असुराणां प्रवृत्तस्तु दम्भभावः स्वभावजः ।
दानं देवा व्यवसिता दममेव महर्षयः ॥ ०१० ॥

एकं शास्तारमासाद्य शब्देनैकेन संस्कृताः ।
नाना व्यवसिताः सर्वे सर्पदेवर्षिदानवाः ॥ ०११ ॥

शृणोत्ययं प्रोच्यमानं गृह्णाति च यथातथम् ।
पृच्छतस्तावतो भूयो गुरुरन्योऽनुमन्यते ॥ ०१२ ॥

तस्य चानुमते कर्म ततः पश्चात्प्रवर्तते ।
गुरुर्बोद्धा च शत्रुश्च द्वेष्टा च हृदि संश्रितः ॥ ०१३ ॥

पापेन विचर.ण्ल्लोके पापचारी भवत्ययम् ।
शुभेन विचर.ण्ल्लोके शुभचारी भवत्युत ॥ ०१४ ॥

कामचारी तु कामेन य इन्द्रियसुखे रतः ।
व्रतवारी सदैवैष य इन्द्रियजये रतः ॥ ०१५ ॥

अपेतव्रतकर्मा तु केवलं ब्रह्मणि श्रितः ।
ब्रह्मभूतश्चर.ण्ल्लोके ब्रह्मचारी भवत्ययम् ॥ ०१६ ॥

ब्रह्मैव समिधस्तस्य ब्रह्माग्निर्ब्रह्मसंस्तरः ।
आपो ब्रह्म गुरुर्ब्रह्म स ब्रह्मणि समाहितः ॥ ०१७ ॥

एतदेतादृशं सूक्ष्मं ब्रह्मचर्यं विदुर्बुधाः ।
विदित्वा चान्वपद्यन्त क्षेत्रज्ञेनानुदर्शिनः ॥ ०१८ ॥

# अध्याय ०२७

ब्राह्मण उवाच ॥

सङ्कल्पदंशमशकं शोकहर्षहिमातपम् ।
मोहान्धकारतिमिरं लोभव्यालसरीसृपम् ॥ ००१ ॥

विषयैकात्ययाध्वानं कामक्रोधविरोधकम् ।
तदतीत्य महादुर्गं प्रविष्टोऽस्मि महद्वनम् ॥ ००२ ॥

ब्राह्मण्युवाच ॥

क्व तद्वनं महाप्राज्ञ के वृक्षाः सरितश्च काः ।
गिरयः पर्वताश्चैव कियत्यध्वनि तद्वनम् ॥ ००३ ॥

ब्राह्मण उवाच ॥

न तदस्ति पृथग्भावे किञ्चिदन्यत्ततः समम् ।
न तदस्त्यपृथग्भावे किञ्चिद्दूरतरं ततः ॥ ००४ ॥

तस्माद्ध्रस्वतरं नास्ति न ततोऽस्ति बृहत्तरम् ।
नास्ति तस्माद्दुःखतरं नास्त्यन्यत्तत्समं सुखम् ॥ ००५ ॥

न तत्प्रविश्य शोचन्ति न प्रहृष्यन्ति च द्विजाः ।
न च बिभ्यति केषाञ्चित्तेभ्यो बिभ्यति के च न ॥ ००६ ॥

तस्मिन्वने सप्त महाद्रुमाश्च ; फलानि सप्तातिथयश्च सप्त ।

सप्ताश्रमाः सप्त समाधयश्च ; दीक्षाश्च सप्तैतदरण्यरूपम्  ॥ ००७  ॥

पञ्चवर्णानि दिव्यानि पुष्पाणि च फलानि च ।
सृजन्तः पादपास्तत्र व्याप्य तिष्ठन्ति तद्वनम्  ॥ ००८  ॥

सुवर्णानि द्विवर्णानि पुष्पाणि च फलानि च ।
सृजन्तः पादपास्तत्र व्याप्य तिष्ठन्ति तद्वनम्  ॥ ००९  ॥

चतुर्वर्णानि दिव्यानि पुष्पाणि च फलानि च ।
सृजन्तः पादपास्तत्र व्याप्य तिष्ठन्ति तद्वनम्  ॥ ०१०  ॥

शङ्कराणि त्रिवर्णानि पुष्पाणि च फलानि च ।
सृजन्तः पादपास्तत्र व्याप्य तिष्ठन्ति तद्वनम्  ॥ ०११  ॥

सुरभीण्येकवर्णानि पुष्पाणि च फलानि च ।
सृजन्तः पादपास्तत्र व्याप्य तिष्ठन्ति तद्वनम्  ॥ ०१२  ॥

बह्न्यव्यक्तवर्णानि पुष्पाणि च फलानि च ।
विसृजन्तौ महावृक्षौ तद्वनं व्याप्य तिष्ठतः  ॥ ०१३  ॥

एको ह्यग्निः सुमना ब्राह्मणोऽत्र ; पञ्चेन्द्रियाणि समिधश्चात्र सन्ति ।
तेभ्यो मोक्षाः सप्त भवन्ति दीक्षा ; गुणाः फलान्यतिथयः फलाशाः  ॥ ०१४  ॥

आतिथ्यं प्रतिगृह्णन्ति तत्र सप्त महर्षयः ।
अर्चितेषु प्रलीनेषु तेष्वन्यद्रोचते वनम्  ॥ ०१५  ॥

प्रतिज्ञावृक्षमफलं शान्तिच्छायासमन्वितम् ।
ज्ञानाश्रयं तृप्तितोयमन्तःक्षेत्रज्ञभास्करम्  ॥ ०१६  ॥

येऽधिगच्छन्ति तत्सन्तस्तेषां नास्ति भयं पुनः ।
ऊर्ध्वं चावाक्च तिर्यक्च तस्य नान्तोऽधिगम्यते  ॥ ०१७  ॥

सप्त स्त्रियस्तत्र वसन्ति सद्यो ; अवाङ्मुखा भानुमत्यो जनित्र्यः ।
ऊर्ध्वं रसानां ददते प्रजाभ्यः ; सर्वान्यथा सर्वमनित्यतां च ॥ ०१८ ॥

तत्रैव प्रतितिष्ठन्ति पुनस्तत्रोदयन्ति च ।
सप्त सप्तर्षयः सिद्धा वसिष्ठप्रमुखाः सह ॥ ०१९ ॥

यशो वर्चो भगश्चैव विजयः सिद्धितेजसी ।
एवमेवानुवर्तन्ते सप्त ज्योतींषि भास्करम् ॥ ०२० ॥

गिरयः पर्वताश्चैव सन्ति तत्र समासतः ।
नद्यश्च सरितो वारि वहन्त्यो ब्रह्मसंभवम् ॥ ०२१ ॥

नदीनां सङ्गमस्तत्र वैतानः समुपह्वरे ।
स्वात्मतृप्ता यतो यान्ति साक्षाद्दान्ताः पितामहम् ॥ ०२२ ॥

कृशाशाः सुव्रताशाश्च तपसा दग्धकिल्बिषाः ।
आत्मन्यात्मानमावेश्य ब्रह्माणं समुपासते ॥ ०२३ ॥

ऋचमप्यत्र शंसन्ति विद्यारण्यविदो जनाः ।
तदरण्यमभिप्रेत्य यथाधीरमजायत ॥ ०२४ ॥

एतदेतादृशं दिव्यमरण्यं ब्राह्मणा विदुः ।
विदित्वा चान्वतिष्ठन्त क्षेत्रज्ञेनानुदर्शितम् ॥ ०२५ ॥

---

# अध्याय ०२८

ब्राह्मण उवाच ॥

गन्धान्न जिघ्रामि रसान्न वेद्मि ; रूपं न पश्यामि न च स्पृशामि ।
न चापि शब्दान्विविधाञ्शृणोमि ; न चापि सङ्कल्पमुपैमि किञ्चित् ॥ ००१ ॥

अर्थानिष्टान्कामयते स्वभावः ; सर्वान्द्वेष्यान्प्रद्विषते स्वभावः ।
कामद्वेषावुद्भवतः स्वभावा ;त्प्राणापानौ जन्तुदेहान्निवेश्य ॥ ००२ ॥

तेभ्यश्चान्यांस्तेष्वनित्यांश्च भावा ;न्भूतात्मानं लक्षयेयं शरीरे ।
तस्मिंस्तिष्ठन्नास्मि शक्यः कथं चि ;त्कामक्रोधाभ्यां जरया मृत्युना च ॥ ००३ ॥

अकामयानस्य च सर्वकामा ;नविद्विषाणस्य च सर्वदोषान् ।
न मे स्वभावेषु भवन्ति लेपा ;स्तोयस्य बिन्दोरिव पुष्करेषु ॥ ००४ ॥

नित्यस्य चैतस्य भवन्ति नित्या ; निरीक्षमाणस्य बहून्स्वभावान् ।
न सज्जते कर्मसु भोगजालं ; दिवीव सूर्यस्य मयूखजालम् ॥ ००५ ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
अध्वर्युयतिसंवादं तं निबोध यशस्विनि ॥ ००६ ॥

प्रोक्ष्यमाणं पशुं दृष्ट्वा यज्ञकर्मण्यथाब्रवीत् ।
यतिरध्वर्युमासीनो हिंसेयमिति कुत्सयन् ॥ ००७ ॥

तमध्वर्युः प्रत्युवाच नायं छागो विनश्यति ।
श्रेयसा योक्ष्यते जन्तुर्यदि श्रुतिरियं तथा ॥ ००८ ॥

यो ह्यस्य पार्थिवो भागः पृथिवीं स गमिष्यति ।
यदस्य वारिजं किञ्चिदपस्तत्प्रतिपद्यते ॥ ००९ ॥

सूर्यं चक्षुर्दिशः श्रोत्रे प्राणोऽस्य दिवमेव च ।
आगमे वर्तमानस्य न मे दोषोऽस्ति कश्चन ॥ ०१० ॥

यतिरुवाच ॥

प्राणैर्वियोगे छागस्य यदि श्रेयः प्रपश्यसि ।
छागार्थे वर्तते यज्ञो भवतः किं प्रयोजनम् ॥ ०११ ॥

अनु त्वा मन्यतां माता पिता भ्राता सखापि च ।
मन्त्रयस्वैनमुन्नीय परवन्तं विशेषतः ॥ ०१२ ॥

य एवमनुमन्येरंस्तान्भवान्प्रष्टुमर्हति ।
तेषामनुमतं श्रुत्वा शक्या कर्तुं विचारणा ॥ ०१३ ॥

प्राणा अप्यस्य छागस्य प्रापितास्ते स्वयोनिषु ।
शरीरं केवलं शिष्टं निश्चेष्टमिति मे मतिः ॥ ०१४ ॥

इन्धनस्य तु तुल्येन शरीरेण विचेतसा ।
हिंसा निर्वेष्टुकामानामिन्धनं पशुसञ्ज्ञितम् ॥ ०१५ ॥

अहिंसा सर्वधर्माणामिति वृद्धानुशासनम् ।
यदहिंस्रं भवेत्कर्म तत्कार्यमिति विद्महे ॥ ०१६ ॥

अहिंसेति प्रतिज्ञेयं यदि वक्ष्याम्यतः परम् ।
शक्यं बहुविधं वक्तुं भवतः कार्यदूषणम् ॥ ०१७ ॥

अहिंसा सर्वभूतानां नित्यमस्मासु रोचते ।
प्रत्यक्षतः साधयामो न परोक्षमुपास्महे ॥ ०१८ ॥

अध्वर्युरुवाच ॥

भूमेर्गन्धगुणान्भुङ्क्षे पिबस्यापोमयान्रसान् ।
ज्योतिषां पश्यसे रूपं स्पृशस्यनिलजान्गुणान् ॥ ०१९ ॥

श‍ृणोष्याकाशजं शब्दं मनसा मन्यसे मतिम् ।
सर्वाण्येतानि भूतानि प्राणा इति च मन्यसे ॥ ०२० ॥

प्राणादाने च नित्योऽसि हिंसायां वर्तते भवान् ।
नास्ति चेष्टा विना हिंसां किं वा त्वं मन्यसे द्विज ॥ ०२१ ॥

यतिरुवाच ॥

अक्षरं च क्षरं चैव द्वैधीभावोऽयमात्मनः ।
अक्षरं तत्र सद्भावः स्वभावः क्षर उच्यते ॥ ०२२ ॥

प्राणो जिह्वा मनः सत्त्वं स्वभावो रजसा सह ।
भावैरेतैर्विमुक्तस्य निर्द्वंद्वस्य निराशिषः ॥ ०२३ ॥

समस्य सर्वभूतेषु निर्ममस्य जितात्मनः ।
समन्तात्परिमुक्तस्य न भयं विद्यते क्वचित् ॥ ०२४ ॥

अध्वर्युरुवाच ॥

सद्भिरेवेह संवासः कार्यो मतिमतां वर ।
भवतो हि मतं श्रुत्वा प्रतिभाति मतिर्मम ॥ ०२५ ॥

भगवन्भगवद्बुद्ध्या प्रतिबुद्धो ब्रवीम्यहम् ।
मतं मन्तुं क्रतुं कर्तुं नापराधोऽस्ति मे द्विज ॥ ०२६ ॥

ब्राह्मण उवाच ॥

उपपत्त्या यतिस्तूष्णीं वर्तमानस्ततः परम् ।
अध्वर्युरपि निर्मोहः प्रचचार महामखे ॥ ०२७ ॥

एवमेतादृशं मोक्षं सुसूक्ष्मं ब्राह्मणा विदुः ।
विदित्वा चानुतिष्ठन्ति क्षेत्रज्ञेनानुदर्शिना ॥ ०२८ ॥

---

# अध्याय ०२९

ब्राह्मण उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
कार्तवीर्यस्य संवादं समुद्रस्य च भामिनि ॥ ००१ ॥

कार्तवीर्यार्जुनो नाम राजा बाहुसहस्रवान् ।
येन सागरपर्यन्ता धनुषा निर्जिता मही ॥ ००२ ॥

स कदाचित्समुद्रान्ते विचरन्बलदर्पितः ।
अवाकिरच्छरशतैः समुद्रमिति नः श्रुतम् ॥ ००३ ॥

तं समुद्रो नमस्कृत्य कृताञ्जलिरुवाच ह ।
मा मुञ्च वीर नाराचान्ब्रूहि किं करवाणि ते ॥ ००४ ॥

मदाश्रयाणि भूतानि त्वद्विसृष्टैर्महेषुभिः ।
वध्यन्ते राजशार्दूल तेभ्यो देह्यभयं विभो ॥ ००५ ॥

अर्जुन उवाच ॥

मत्समो यदि सङ्ग्रामे शरासनधरः क्वचित् ।
विद्यते तं ममाचक्ष्व यः समासीत मां मृधे ॥ ००६ ॥

समुद्र उवाच ॥

महर्षिर्जमदग्निस्ते यदि राजन्परिश्रुतः ।
तस्य पुत्रस्तवातिथ्यं यथावत्कर्तुमर्हति ॥ ००७ ॥

ततः स राजा प्रययौ क्रोधेन महता वृतः ।
स तमाश्रममागम्य राममेवान्वपद्यत ॥ ००८ ॥

स रामप्रतिकूलानि चकार सह बन्धुभिः ।
आयासं जनयामास रामस्य च महात्मनः ॥ ००९ ॥

ततस्तेजः प्रजज्वाल रामस्यामिततेजसः ।
प्रदहद्रिपुसैन्यानि तदा कमललोचने ॥ ०१० ॥

ततः परशुमादाय स तं बाहुसहस्रिणम् ।
चिच्छेद सहसा रामो बाहुशाखमिव द्रुमम् ॥ ०११ ॥

तं हतं पतितं दृष्ट्वा समेताः सर्वबान्धवाः ।
असीनादाय शक्तीश्च भार्गवं पर्यवारयन् ॥ ०१२ ॥

रामोऽपि धनुरादाय रथमारुह्य सत्वरः ।
विसृजञ्शरवर्षाणि व्यधमत्पार्थिवं बलम् ॥ ०१३ ॥

ततस्तु क्षत्रियाः केचिज्जमदग्निं निहत्य च ।
विविशुर्गिरिदुर्गाणि मृगाः सिंहार्दिता इव ॥ ०१४ ॥

तेषां स्वविहितं कर्म तद्भयान्नानुतिष्ठताम् ।
प्रजा वृषलतां प्राप्ता ब्राह्मणानामदर्शनात् ॥ ०१५ ॥

त एते द्रमिडाः काशाः पुण्ड्राश्च शबरैः सह ।
वृषलत्वं परिगता व्युत्थानात्क्षत्रधर्मतः ॥ ०१६ ॥

ततस्तु हतवीरासु क्षत्रियासु पुनः पुनः ।
द्विजैरुत्पादितं क्षत्रं जामदग्न्यो न्यकृन्तत ॥ ०१७ ॥

एकविंशतिमेधान्ते रामं वागशरीरिणी ।
दिव्या प्रोवाच मधुरा सर्वलोकपरिश्रुता ॥ ०१८ ॥

राम राम निवर्तस्व कं गुणं तात पश्यसि ।
क्षत्रबन्धूनिमान्प्राणैर्विप्रयोज्य पुनः पुनः ॥ ०१९ ॥

तथैव तं महात्मानमृचीकप्रमुखास्तदा ।
पितामहा महाभाग निवर्तस्वेत्यथाब्रुवन् ॥ ०२० ॥

पितुर्वधममृष्यंस्तु रामः प्रोवाच तानृषीन् ।
नार्हन्तीह भवन्तो मां निवारयितुमित्युत ॥ ०२१ ॥

पितर ऊचुः ॥

नार्हसे क्षत्रबन्धूंस्त्वं निहन्तुं जयतां वर ।
न हि युक्तं त्वया हन्तुं ब्राह्मणेन सता नृपान् ॥ ०२२ ॥

---

# अध्याय ०३०

पितर ऊचुः ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
श्रुत्वा च तत्तथा कार्यं भवता द्विजसत्तम ॥ ००१ ॥

अलर्को नाम राजर्षिरभवत्सुमहातपाः ।
धर्मज्ञः सत्यसंधश्च महात्मा सुमहाव्रतः ॥ ००२ ॥

स सागरान्तां धनुषा विनिर्जित्य महीमिमाम् ।
कृत्वा सुदुष्करं कर्म मनः सूक्ष्मे समादधे ॥ ००३ ॥

स्थितस्य वृक्षमूलेऽथ तस्य चिन्ता बभूव ह ।
उत्सृज्य सुमहद्राज्यं सूक्ष्मं प्रति महामते ॥ ००४ ॥

अलर्क उवाच ॥

मनसो मे बलं जातं मनो जित्वा ध्रुवो जयः ।
अन्यत्र बाणानस्यामि शत्रुभिः परिवारितः ॥ ००५ ॥

यदिदं चापलान्मूर्तेः सर्वमेतच्चिकीर्षति ।
मनः प्रति सुतीक्ष्णाग्रानहं मोक्ष्यामि सायकान् ॥ ००६ ॥

मन उवाच ॥

नेमे बाणास्तरिष्यन्ति मामलर्क कथञ्चन ।
तवैव मर्म भेत्स्यन्ति भिन्नमर्मा मरिष्यसि ॥ ००७ ॥

अन्यान्बाणान्समीक्षस्व यैस्त्वं मां सूदयिष्यसि ।
तच्छ्रुत्वा स विचिन्त्याथ ततो वचनमब्रवीत् ॥ ००८ ॥

अलर्क उवाच ॥

आघ्राय सुबहून्गन्धांस्तानेव प्रतिगृध्यति ।
तस्माद्घ्राणं प्रति शरान्प्रतिमोक्ष्याम्यहं शितान् ॥ ००९ ॥

घ्राण उवाच ॥

नेमे बाणास्तरिष्यन्ति मामलर्क कथञ्चन ।
तवैव मर्म भेत्स्यन्ति भिन्नमर्मा मरिष्यसि ॥ ०१० ॥

अन्यान्बाणान्समीक्षस्व यैस्त्वं मां सूदयिष्यसि ।
तच्छ्रुत्वा स विचिन्त्याथ ततो वचनमब्रवीत् ॥ ०११ ॥

अलर्क उवाच ॥

इयं स्वादून्रसान्भुक्त्वा तानेव प्रतिगृध्यति ।
तस्माज्जिह्वां प्रति शरान्प्रतिमोक्ष्याम्यहं शितान् ॥ ०१२ ॥

जिह्वोवाच ॥

नेमे बाणास्तरिष्यन्ति मामलर्क कथञ्चन ।
तवैव मर्म भेत्स्यन्ति भिन्नमर्मा मरिष्यसि ॥ ०१३ ॥

अन्यान्बाणान्समीक्षस्व यैस्त्वं मां सूदयिष्यसि ।
तच्छ्रुत्वा स विचिन्त्याथ ततो वचनमब्रवीत् ॥ ०१४ ॥

अलर्क उवाच ॥

स्पृष्ट्वा त्वग्विविधान्स्पर्शांस्तानेव प्रतिगृध्यति ।
तस्मात्त्वचं पाटयिष्ये विविधैः कङ्कपत्रिभिः ॥ ०१५ ॥

त्वगुवाच ॥

नेमे बाणास्तरिष्यन्ति मामलर्क कथञ्चन ।
तवैव मर्म भेत्स्यन्ति भिन्नमर्मा मरिष्यसि ॥ ०१६ ॥

अन्यान्बाणान्समीक्षस्व यैस्त्वं मां सूदयिष्यसि ।
तच्छ्रुत्वा स विचिन्त्याथ ततो वचनमब्रवीत् ॥ ०१७ ॥

अलर्क उवाच ॥

श्रुत्वा वै विविधाञ्शब्दांस्तानेव प्रतिगृध्यति ।
तस्माच्छ्रोत्रं प्रति शरान्प्रतिमोक्ष्याम्यहं शितान् ॥ ०१८ ॥

श्रोत्र उवाच ॥

नेमे बाणास्तरिष्यन्ति मामलर्क कथञ्चन ।
तवैव मर्म भेत्स्यन्ति ततो हास्यसि जीवितम् ॥ ०१९ ॥

अन्यान्बाणान्समीक्षस्व यैस्त्वं मां सूदयिष्यसि ।
तच्छ्रुत्वा स विचिन्त्याथ ततो वचनमब्रवीत् ॥ ०२० ॥

अलर्क उवाच ॥

दृष्ट्वा वै विविधान्भावांस्तानेव प्रतिगृध्यति ।
तस्माच्चक्षुः प्रति शरान्प्रतिमोक्ष्याम्यहं शितान् ॥ ०२१ ॥

चक्षुरुवाच ॥

नेमे बाणास्तरिष्यन्ति मामलर्क कथञ्चन ।
तवैव मर्म भेत्स्यन्ति भिन्नमर्मा मरिष्यसि ॥ ०२२ ॥

अन्यान्बाणान्समीक्षस्व यैस्त्वं मां सूदयिष्यसि ।
तच्छ्रुत्वा स विचिन्त्याथ ततो वचनमब्रवीत् ॥ ०२३ ॥

अलर्क उवाच ॥

इयं निष्ठा बहुविधा प्रज्ञया त्वध्यवस्यति ।

तस्माद्बुद्धिं प्रति शरान्प्रतिमोक्ष्याम्यहं शितान्  ॥ ०२४  ॥

बुद्धिरुवाच  ॥

नेमे बाणास्तरिष्यन्ति मामलर्क कथञ्चन ।
तवैव मर्म भेत्स्यन्ति भिन्नमर्मा मरिष्यसि  ॥ ०२५  ॥

पितर ऊचुः  ॥

ततोऽलर्कस्तपो घोरमास्थायाथ सुदुष्करम् ।
नाध्यगच्छत्परं शक्त्या बाणमेतेषु सप्तसु  ॥ ०२६  ॥

सुसमाहितचेतास्तु ततोऽचिन्तयत प्रभुः  ॥ ०२६  ॥

स विचिन्त्य चिरं कालमलर्को द्विजसत्तम ।
नाध्यगच्छत्परं श्रेयो योगान्मतिमतां वरः  ॥ ०२७  ॥

स एकाग्रं मनः कृत्वा निश्चलो योगमास्थितः ।
इन्द्रियाणि जघानाशु बाणेनैकेन वीर्यवान्  ॥ ०२८  ॥

योगेनात्मानमाविश्य संसिद्धिं परमां ययौ  ॥ ०२८  ॥

विस्मितश्चापि राजर्षिरिमां गाथां जगाद ह ।
अहो कष्टं यदस्माभिः पूर्वं राज्यमनुष्ठितम्  ॥ ०२९  ॥

इति पश्चान्मया ज्ञातं योगान्नास्ति परं सुखम्  ॥ ०२९  ॥

इति त्वमपि जानीहि राम मा क्षत्रियाञ्जहि ।
तपो घोरमुपातिष्ठ ततः श्रेयोऽभिपत्स्यसे  ॥ ०३०  ॥

ब्राह्मण उवाच  ॥

इत्युक्तः स तपो घोरं जामदग्न्यः पितामहैः ।
आस्थितः सुमहाभागो ययौ सिद्धिं च दुर्गमाम् ॥ ०३१ ॥

---

# अध्याय ०३१

ब्राह्मण उवाच ॥

त्रयो वै रिपवो लोके नव वै गुणतः स्मृताः ।
हर्षः स्तम्भोऽभिमानश्च त्रयस्ते सात्त्विका गुणाः ॥ ००१ ॥

शोकः क्रोधोऽतिसंरम्भो राजसास्ते गुणाः स्मृताः ।
स्वप्नस्तन्द्री च मोहश्च त्रयस्ते तामसा गुणाः ॥ ००२ ॥

एतान्निकृत्य धृतिमान्बाणसंघैरतन्द्रितः ।
जेतुं परानुत्सहते प्रशान्तात्मा जितेन्द्रियः ॥ ००३ ॥

अत्र गाथाः कीर्तयन्ति पुराकल्पविदो जनाः ।
अम्बरीषेण या गीता राज्ञा राज्यं प्रशासता ॥ ००४ ॥

समुदीर्णेषु दोषेषु वध्यमानेषु साधुषु ।
जग्राह तरसा राज्यमम्बरीष इति श्रुतिः ॥ ००५ ॥

स निगृह्य महादोषान्साधून्समभिपूज्य च ।
जगाम महतीं सिद्धिं गाथां चेमां जगाद ह ॥ ००६ ॥

भूयिष्ठं मे जिता दोषा निहताः सर्वशत्रवः ।
एको दोषोऽवशिष्टस्तु वध्यः स न हतो मया ॥ ००७ ॥

येन युक्तो जन्तुरयं वैतृष्ण्यं नाधिगच्छति ।
तृष्णार्त इव निम्नानि धावमानो न बुध्यते ॥ ००८ ॥

अकार्यमपि येनेह प्रयुक्तः सेवते नरः ।
तं लोभमसिभिस्तीक्ष्णैर्निकृन्तन्तं निकृन्तत ॥ ००९ ॥

लोभाद्धि जायते तृष्णा ततश्चिन्ता प्रसज्यते ।
स लिप्समानो लभते भूयिष्ठं राजसान्गुणान् ॥ ०१० ॥

स तैर्गुणैः संहतदेहबन्धनः ; पुनः पुनर्जायति कर्म चेहते ।
जन्मक्षये भिन्नविकीर्णदेहः ; पुनर्मृत्युं गच्छति जन्मनि स्वे ॥ ०११ ॥

तस्मादेनं सम्यगवेक्ष्य लोभं ; निगृह्य धृत्यात्मनि राज्यमिच्छेत् ।
एतद्राज्यं नान्यदस्तीति विद्या ;द्यस्त्वत्र राजा विजितो ममैकः ॥ ०१२ ॥

इति राज्ञाम्बरीषेण गाथा गीता यशस्विना ।
आधिराज्यं पुरस्कृत्य लोभमेकं निकृन्तता ॥ ०१३ ॥

---

# अध्याय ०३२

ब्राह्मण उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
ब्राह्मणस्य च संवादं जनकस्य च भामिनि ॥ ००१ ॥

ब्राह्मणं जनको राजा सन्नं कस्मिंश्चिदागमे ।
विषये मे न वस्तव्यमिति शिष्ट्यर्थमब्रवीत् ॥ ००२ ॥

इत्युक्तः प्रत्युवाचाथ ब्राह्मणो राजसत्तमम् ।
आचक्ष्व विषयं राजन्यावांस्तव वशे स्थितः ॥ ००३ ॥

सोऽन्यस्य विषये राज्ञो वस्तुमिच्छाम्यहं विभो ।
वचस्ते कर्तुमिच्छामि यथाशास्त्रं महीपते ॥ ००४ ॥

इत्युक्तः स तदा राजा ब्राह्मणेन यशस्विना ।
मुहुरुष्णं च निःश्वस्य न स तं प्रत्यभाषत ॥ ००५ ॥

तमासीनं ध्यायमानं राजानममितौजसम् ।
कश्मलं सहसागच्छद्भानुमन्तमिव ग्रहः ॥ ००६ ॥

समाश्वास्य ततो राजा व्यपेते कश्मले तदा ।
ततो मुहूर्तादिव तं ब्राह्मणं वाक्यमब्रवीत् ॥ ००७ ॥

पितृपैतामहे राज्ये वश्ये जनपदे सति ।
विषयं नाधिगच्छामि विचिन्वन्पृथिवीमिमाम् ॥ ००८ ॥

नाध्यगच्छं यदा पृथ्व्यां मिथिला मार्गिता मया ।
नाध्यगच्छं यदा तस्यां स्वप्रजा मार्गिता मया ॥ ००९ ॥

नाध्यगच्छं यदा तासु तदा मे कश्मलोऽभवत् ।
ततो मे कश्मलस्यान्ते मतिः पुनरुपस्थिता ॥ ०१० ॥

तया न विषयं मन्ये सर्वो वा विषयो मम ।
आत्मापि चायं न मम सर्वा वा पृथिवी मम ॥ ०११ ॥

उष्यतां यावदुत्साहो भुज्यतां यावदिष्यते ॥ ०११ ॥

पितृपैतामहे राज्ये वश्ये जनपदे सति ।

ब्रूहि कां बुद्धिमास्थाय ममत्वं वर्जितं त्वया ॥ ०१२ ॥

कां वा बुद्धिं विनिश्चित्य सर्वो वै विषयस्तव ।
नावैषि विषयं येन सर्वो वा विषयस्तव ॥ ०१३ ॥

जनक उवाच ॥

अन्तवन्त इहारम्भा विदिताः सर्वकर्मसु ।
नाध्यगच्छमहं यस्मान्ममेदमिति यद्भवेत् ॥ ०१४ ॥

कस्येदमिति कस्य स्वमिति वेदवचस्तथा ।
नाध्यगच्छमहं बुद्ध्या ममेदमिति यद्भवेत् ॥ ०१५ ॥

एतां बुद्धिं विनिश्चित्य ममत्वं वर्जितं मया ।
शृणु बुद्धिं तु यां ज्ञात्वा सर्वत्र विषयो मम ॥ ०१६ ॥

नाहमात्मार्थमिच्छामि गन्धान्घ्राणगतानपि ।
तस्मान्मे निर्जिता भूमिर्वशे तिष्ठति नित्यदा ॥ ०१७ ॥

नाहमात्मार्थमिच्छामि रसानास्येऽपि वर्ततः ।
आपो मे निर्जितास्तस्माद्वशे तिष्ठन्ति नित्यदा ॥ ०१८ ॥

नाहमात्मार्थमिच्छामि रूपं ज्योतिश्च चक्षुषा ।
तस्मान्मे निर्जितं ज्योतिर्वशे तिष्ठति नित्यदा ॥ ०१९ ॥

नाहमात्मार्थमिच्छामि स्पर्शांस्त्वचि गताश्च ये ।
तस्मान्मे निर्जितो वायुर्वशे तिष्ठति नित्यदा ॥ ०२० ॥

नाहमात्मार्थमिच्छामि शब्दाञ्श्रोत्रगतानपि ।
तस्मान्मे निर्जिताः शब्दा वशे तिष्ठन्ति नित्यदा ॥ ०२१ ॥

नाहमात्मार्थमिच्छामि मनो नित्यं मनोन्तरे ।
मनो मे निर्जितं तस्माद्वशे तिष्ठति नित्यदा ॥ ०२२ ॥

देवेभ्यश्च पितृभ्यश्च भूतेभ्योऽतिथिभिः सह ।
इत्यर्थं सर्व एवेमे समारम्भा भवन्ति वै ॥ ०२३ ॥

ततः प्रहस्य जनकं ब्राह्मणः पुनरब्रवीत् ।
त्वज्जिज्ञासार्थमद्येह विद्धि मां धर्ममागतम् ॥ ०२४ ॥

त्वमस्य ब्रह्मनाभस्य बुद्ध्यारस्यानिवर्तिनः ।
सत्त्वनेमिनिरुद्धस्य चक्रस्यैकः प्रवर्तकः ॥ ०२५ ॥

---

# अध्याय ०३३

ब्राह्मण उवाच ॥

नाहं तथा भीरु चरामि लोके ; तथा त्वं मां तर्कयसे स्वबुद्ध्या ।
विप्रोऽस्मि मुक्तोऽस्मि वनेचरोऽस्मि ; गृहस्थधर्मा ब्रह्मचारी तथास्मि ॥ ००१ ॥

नाहमस्मि यथा मां त्वं पश्यसे चक्षुषा शुभे ।
मया व्याप्तमिदं सर्वं यत्किञ्चिज्जगतीगतम् ॥ ००२ ॥

ये केचिज्जन्तवो लोके जङ्गमाः स्थावराश्च ह ।
तेषां मामन्तकं विद्धि दारूणामिव पावकम् ॥ ००३ ॥

राज्यं पृथिव्यां सर्वस्यामथ वापि त्रिविष्टपे ।

तथा बुद्धिरियं वेत्ति बुद्धिरेव धनं मम ॥ ००४ ॥

एकः पन्था ब्राह्मणानां येन गच्छन्ति तद्विदः ।
गृहेषु वनवासेषु गुरुवासेषु भिक्षुषु ॥ ००५ ॥

लिङ्गैर्बहुभिरव्यग्रैरेका बुद्धिरुपास्यते ॥ ००५ ॥

नानालिङ्गाश्रमस्थानां येषां बुद्धिः शमात्मिका ।
ते भावमेकमायान्ति सरितः सागरं यथा ॥ ००६ ॥

बुद्ध्यायं गम्यते मार्गः शरीरेण न गम्यते ।
आद्यन्तवन्ति कर्माणि शरीरं कर्मबन्धनम् ॥ ००७ ॥

तस्मात्ते सुभगे नास्ति परलोककृतं भयम् ।
मद्भावभावनिरता ममैवात्मानमेष्यसि ॥ ००८ ॥

---

# अध्याय ०३४

ब्राह्मण्युवाच ॥

नेदमल्पात्मना शक्यं वेदितुं नाकृतात्मना ।
बहु चाल्पं च सङ्क्षिप्तं विप्लुतं च मतं मम ॥ ००१ ॥

उपायं तु मम ब्रूहि येनैषा लभ्यते मतिः ।
तन्मन्ये कारणतमं यत एषा प्रवर्तते ॥ ००२ ॥

ब्राह्मण उवाच ॥

अरणीं ब्राह्मणीं विद्धि गुरुरस्योत्तरारणिः ।
तपःश्रुतेऽभिमथ्नीतो ज्ञानाग्निर्जायते ततः ॥ ००३ ॥

ब्राह्मण्युवाच ॥

यदिदं ब्रह्मणो लिङ्गं क्षेत्रज्ञमिति सञ्ज्ञितम् ।
ग्रहीतुं येन तच्छक्यं लक्षणं तस्य तत्क नु ॥ ००४ ॥

ब्राह्मण उवाच ॥

अलिङ्गो निर्गुणश्चैव कारणं नास्य विद्यते ।
उपायमेव वक्ष्यामि येन गृह्येत वा न वा ॥ ००५ ॥

सम्यगप्युपदिष्टश्च भ्रमरैरिव लक्ष्यते ।
कर्मबुद्धिरबुद्धित्वाज्ज्ञानलिङ्गैरिवाश्रितम् ॥ ००६ ॥

इदं कार्यमिदं नेति न मोक्षेषूपदिश्यते ।
पश्यतः शृण्वतो बुद्धिरात्मनो येषु जायते ॥ ००७ ॥

यावन्त इह शक्येरंस्तावतोंऽशान्प्रकल्पयेत् ।
व्यक्तानव्यक्तरूपांश्च शतशोऽथ सहस्रशः ॥ ००८ ॥

सर्वान्नानात्वयुक्तांश्च सर्वान्प्रत्यक्षहेतुकान् ।
यतः परं न विद्येत ततोऽभ्यासे भविष्यति ॥ ००९ ॥

वासुदेव उवाच ॥

ततस्तु तस्या ब्राह्मण्या मतिः क्षेत्रज्ञसङ्क्षये ।
क्षेत्रज्ञादेव परतः क्षेत्रज्ञोऽन्यः प्रवर्तते ॥ ०१० ॥

अर्जुन उवाच ॥

क्व नु सा ब्राह्मणी कृष्ण क्व चासौ ब्राह्मणर्षभः ।
याभ्यां सिद्धिरियं प्राप्ता तावुभौ वद मेऽच्युत ॥ ०११ ॥

वासुदेव उवाच ॥

मनो मे ब्राह्मणं विद्धि बुद्धिं मे विद्धि ब्राह्मणीम् ।
क्षेत्रज्ञ इति यश्चोक्तः सोऽहमेव धनञ्जय ॥ ०१२ ॥

---

# अध्याय ०३५

अर्जुन उवाच ॥

ब्रह्म यत्परमं वेद्यं तन्मे व्याख्यातुमर्हसि ।
भवतो हि प्रसादेन सूक्ष्मे मे रमते मतिः ॥ ००१ ॥

वासुदेव उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
संवादं मोक्षसंयुक्तं शिष्यस्य गुरुणा सह ॥ ००२ ॥

कश्चिद्ब्राह्मणमासीनमाचार्यं संशितव्रतम् ।
शिष्यः पप्रच्छ मेधावी किं स्विच्छ्रेयः परंतप ॥ ००३ ॥

भगवन्तं प्रपन्नोऽहं निःश्रेयसपरायणः ।
याचे त्वां शिरसा विप्र यद्ब्रूयां तद्विचक्ष्व मे ॥ ००४ ॥

तमेवंवादिनं पार्थ शिष्यं गुरुरुवाच ह ।

कथयस्व प्रवक्ष्यामि यत्र ते संशयो द्विज ॥ ००५ ॥

इत्युक्तः स कुरुश्रेष्ठ गुरुणा गुरुवत्सलः ।
प्राञ्जलिः परिपप्रच्छ यत्तच्छृणु महामते ॥ ००६ ॥

शिष्य उवाच ॥

कुतश्चाहं कुतश्च त्वं तत्सत्यं ब्रूहि यत्परम् ।
कुतो जातानि भूतानि स्थावराणि चराणि च ॥ ००७ ॥

केन जीवन्ति भूतानि तेषामायुः किमात्मकम् ।
किं सत्यं किं तपो विप्र के गुणाः सद्भिरीरिताः ॥ ००८ ॥

के पन्थानः शिवाः सन्ति किं सुखं किं च दुष्कृतम् ॥ ००८ ॥

एतान्मे भगवन्प्रश्नान्याथातथ्येन सत्तम ।
वक्तुमर्हसि विप्रर्षे यथावदिह तत्त्वतः ॥ ००९ ॥

वासुदेव उवाच ॥

तस्मै संप्रतिपन्नाय यथावत्परिपृच्छते ।
शिष्याय गुणयुक्ताय शान्ताय गुरुवर्तिने ॥ ०१० ॥

छायाभूताय दान्ताय यतये ब्रह्मचारिणे ॥ ०१० ॥

तान्प्रश्नानब्रवीत्पार्थ मेधावी स धृतव्रतः ।
गुरुः कुरुकुलश्रेष्ठ सम्यक्सर्वानरिंदम ॥ ०११ ॥

ब्रह्मप्रोक्तमिदं धर्ममृषिप्रवरसेवितम् ।
वेदविद्यासमावाप्यं तत्त्वभूतार्थभावनम् ॥ ०१२ ॥

भूतभव्यभविष्यादिधर्मकामार्थनिश्चयम् ।
सिद्धसंघपरिज्ञातं पुराकल्पं सनातनम्  ॥ ०१३  ॥

प्रवक्ष्येऽहं महाप्राज्ञ पदमुत्तममद्य ते ।
बुद्ध्वा यदिह संसिद्धा भवन्तीह मनीषिणः  ॥ ०१४  ॥

उपगम्यर्षयः पूर्वं जिज्ञासन्तः परस्परम् ।
बृहस्पतिभरद्वाजौ गौतमो भार्गवस्तथा  ॥ ०१५  ॥

वसिष्ठः काश्यपश्चैव विश्वामित्रोऽत्रिरेव च ।
मार्गान्सर्वान्परिक्रम्य परिश्रान्ताः स्वकर्मभिः  ॥ ०१६  ॥

ऋषिमाङ्गिरसं वृद्धं पुरस्कृत्य तु ते द्विजाः ।
ददृशुर्ब्रह्मभवने ब्रह्माणं वीतकल्मषम्  ॥ ०१७  ॥

तं प्रणम्य महात्मानं सुखासीनं महर्षयः ।
पप्रच्छुर्विनयोपेता निःश्रेयसमिदं परम्  ॥ ०१८  ॥

कथं कर्म क्रियात्साधु कथं मुच्येत किल्बिषात् ।
के नो मार्गाः शिवाश्च स्युः किं सत्यं किं च दुष्कृतम्  ॥ ०१९  ॥

केनोभौ कर्मपन्थानौ महत्त्वं केन विन्दति ।
प्रलयं चापवर्गं च भूतानां प्रभवाप्ययौ  ॥ ०२०  ॥

इत्युक्तः स मुनिश्रेष्ठैर्यदाह प्रपितामहः ।
तत्तेऽहं संप्रवक्ष्यामि शृणु शिष्य यथागमम्  ॥ ०२१  ॥

ब्रह्मोवाच  ॥

सत्याद्भूतानि जातानि स्थावराणि चराणि च ।
तपसा तानि जीवन्ति इति तद्वित्त सुव्रताः  ॥ ०२२  ॥

स्वां योनिं पुनरागम्य वर्तन्ते स्वेन कर्मणा ।
सत्यं हि गुणसंयुक्तं नियतं पञ्चलक्षणम्  ॥ ०२३  ॥

ब्रह्म सत्यं तपः सत्यं सत्यं चैव प्रजापतिः ।
सत्याद्भूतानि जातानि भूतं सत्यमयं महत्  ॥ ०२४  ॥

तस्मात्सत्याश्रया विप्रा नित्यं योगपरायणाः ।
अतीतक्रोधसंतापा नियता धर्मसेतवः  ॥ ०२५  ॥

अन्योन्यनियतान्वैद्यान्धर्मसेतुप्रवर्तकान् ।
तानहं संप्रवक्ष्यामि शाश्वतान्लोकभावनान्  ॥ ०२६  ॥

चातुर्विद्यं तथा वर्णांश्चतुरश्चाश्रमान्पृथक् ।
धर्ममेकं चतुष्पादं नित्यमाहुर्मनीषिणः  ॥ ०२७  ॥

पन्थानं वः प्रवक्ष्यामि शिवं क्षेमकरं द्विजाः ।
नियतं ब्रह्मभावाय यातं पूर्वं मनीषिभिः  ॥ ०२८  ॥

गदतस्तं ममाद्येह पन्थानं दुर्विदं परम् ।
निबोधत महाभागा निखिलेन परं पदम्  ॥ ०२९  ॥

ब्रह्मचारिकमेवाहुराश्रमं प्रथमं पदम् ।
गार्हस्थ्यं तु द्वितीयं स्याद्वानप्रस्थमतः परम्  ॥ ०३०  ॥

ततः परं तु विज्ञेयमध्यात्मं परमं पदम्  ॥ ०३०  ॥

ज्योतिराकाशमादित्यो वायुरिन्द्रः प्रजापतिः ।
नोपैति यावदध्यात्मं तावदेतान्न पश्यति  ॥ ०३१  ॥

तस्योपायं प्रवक्ष्यामि पुरस्तात्तं निबोधत  ॥ ०३१  ॥

फलमूलानिलभुजां मुनीनां वसतां वने ।
वानप्रस्थं द्विजातीनां त्रयाणामुपदिश्यते ॥ ०३२ ॥

सर्वेषामेव वर्णानां गार्हस्थ्यं तद्विधीयते ।
श्रद्धालक्षणमित्येवं धर्मं धीराः प्रचक्षते ॥ ०३३ ॥

इत्येते देवयाना वः पन्थानः परिकीर्तिताः ।
सद्भिरध्यासिता धीरैः कर्मभिर्धर्मसेतवः ॥ ०३४ ॥

एतेषां पृथगध्यास्ते यो धर्मं संशितव्रतः ।
कालात्पश्यति भूतानां सदैव प्रभवाप्ययौ ॥ ०३५ ॥

अतस्तत्त्वानि वक्ष्यामि याथातथ्येन हेतुना ।
विषयस्थानि सर्वाणि वर्तमानानि भागशः ॥ ०३६ ॥

महानात्मा तथाव्यक्तमहङ्कारस्तथैव च ।
इन्द्रियाणि दशैकं च महाभूतानि पञ्च च ॥ ०३७ ॥

विशेषाः पञ्चभूतानामित्येषा वैदिकी श्रुतिः ।
चतुर्विंशतिरेषा वस्तत्त्वानां संप्रकीर्तिता ॥ ०३८ ॥

तत्त्वानामथ यो वेद सर्वेषां प्रभवाप्ययौ ।
स धीरः सर्वभूतेषु न मोहमधिगच्छति ॥ ०३९ ॥

तत्त्वानि यो वेदयते यथातथं ; गुणांश्च सर्वानखिलाश्च देवताः ।
विधूतपाप्मा प्रविमुच्य बन्धनं ; स सर्वलोकानमलान्समश्नुते ॥ ०४० ॥

# अध्याय ०३६

ब्रह्मोवाच ॥

तदव्यक्तमनुद्रिक्तं सर्वव्यापि ध्रुवं स्थिरम् ।
नवद्वारं पुरं विद्यात्त्रिगुणं पञ्चधातुकम् ॥ ००१ ॥

एकादशपरिक्षेपं मनो व्याकरणात्मकम् ।
बुद्धिस्वामिकमित्येतत्परमेकादशं भवेत् ॥ ००२ ॥

त्रीणि स्रोतांसि यान्यस्मिन्नाप्यायन्ते पुनः पुनः ।
प्रणाड्यस्तिस्र एवैताः प्रवर्तन्ते गुणात्मिकाः ॥ ००३ ॥

तमो रजस्तथा सत्त्वं गुणानेतान्प्रचक्षते ।
अन्योन्यमिथुनाः सर्वे तथान्योन्यानुजीविनः ॥ ००४ ॥

अन्योन्यापाश्रयाश्चैव तथान्योन्यानुवर्तिनः ।
अन्योन्यव्यतिषक्ताश्च त्रिगुणाः पञ्च धातवः ॥ ००५ ॥

तमसो मिथुनं सत्त्वं सत्त्वस्य मिथुनं रजः ।
रजसश्चापि सत्त्वं स्यात्सत्त्वस्य मिथुनं तमः ॥ ००६ ॥

नियम्यते तमो यत्र रजस्तत्र प्रवर्तते ।
नियम्यते रजो यत्र सत्त्वं तत्र प्रवर्तते ॥ ००७ ॥

नैशात्मकं तमो विद्यात्त्रिगुणं मोहसञ्ज्ञितम् ।
अधर्मलक्षणं चैव नियतं पापकर्मसु ॥ ००८ ॥

प्रवृत्त्यात्मकमेवाहू रजः पर्यायकारकम् ।
प्रवृत्तं सर्वभूतेषु दृश्यतोत्पत्तिलक्षणम् ॥ ००९ ॥

प्रकाशं सर्वभूतेषु लाघवं श्रद्दधानता ।
सात्त्विकं रूपमेवं तु लाघवं साधुसंमितम्  ॥ ०१०  ॥

एतेषां गुणतत्त्वं हि वक्ष्यते हेत्वहेतुभिः ।
समासव्यासयुक्तानि तत्त्वतस्तानि वित्त मे  ॥ ०११  ॥

संमोहोऽज्ञानमत्यागः कर्मणामविनिर्णयः ।
स्वप्नः स्तम्भो भयं लोभः शोकः सुकृतदूषणम्  ॥ ०१२  ॥

अस्मृतिश्चाविपाकश्च नास्तिक्यं भिन्नवृत्तिता ।
निर्विशेषत्वमन्धत्वं जघन्यगुणवृत्तिता  ॥ ०१३  ॥

अकृते कृतमानित्वमज्ञाने ज्ञानमानिता ।
अमैत्री विकृतो भावो अश्रद्धा मूढभावना  ॥ ०१४  ॥

अनार्जवमसञ्ज्ञत्वं कर्म पापमचेतना ।
गुरुत्वं सन्नभावत्वमसितत्वमवाग्गतिः  ॥ ०१५  ॥

सर्व एते गुणा विप्रास्तामसाः संप्रकीर्तिताः ।
ये चान्ये नियता भावा लोकेऽस्मिन्मोहसञ्ज्ञिताः  ॥ ०१६  ॥

तत्र तत्र नियम्यन्ते सर्वे ते तामसा गुणाः ।
परिवादकथा नित्यं देवब्राह्मणवैदिकाः  ॥ ०१७  ॥

अत्यागश्चाभिमानश्च मोहो मन्युस्तथाक्षमा ।
मत्सरश्चैव भूतेषु तामसं वृत्तमिष्यते  ॥ ०१८  ॥

वृथारम्भाश्च ये केचिद्वृथादानानि यानि च ।
वृथाभक्षणमित्येतत्तामसं वृत्तमिष्यते  ॥ ०१९  ॥

अतिवादोऽतितिक्षा च मात्सर्यमतिमानिता ।

अश्रद्दधानता चैव तामसं वृत्तमिष्यते ॥ ०२० ॥

एवंविधास्तु ये केचिल्लोकेऽस्मिन्पापकर्मिणः ।
मनुष्या भिन्नमर्यादाः सर्वे ते तामसा जनाः ॥ ०२१ ॥

तेषां योनिं प्रवक्ष्यामि नियतां पापकर्मणाम् ।
अवाङ्निरयभावाय तिर्यङ्निरयगामिनः ॥ ०२२ ॥

स्थावराणि च भूतानि पशवो वाहनानि च ।
क्रव्यादा दन्दशूकाश्च कृमिकीटविहङ्गमाः ॥ ०२३ ॥

अण्डजा जन्तवो ये च सर्वे चापि चतुष्पदाः ।
उन्मत्ता बधिरा मूका ये चान्ये पापरोगिणः ॥ ०२४ ॥

मग्नास्तमसि दुर्वृत्ताः स्वकर्मकृतलक्षणाः ।
अवाक्स्रोतस इत्येते मग्नास्तमसि तामसाः ॥ ०२५ ॥

तेषामुत्कर्षमुद्रेकं वक्ष्याम्यहमतः परम् ।
यथा ते सुकृता.ण्ल्लोका.ण्ल्लभन्ते पुण्यकर्मिणः ॥ ०२६ ॥

अन्यथा प्रतिपन्नास्तु विवृद्धा ये च कर्मसु ।
स्वकर्मनिरतानां च ब्राह्मणानां शुभैषिणाम् ॥ ०२७ ॥

संस्कारेणोर्ध्वमायान्ति यतमानाः सलोकताम् ।
स्वर्गं गच्छन्ति देवानामित्येषा वैदिकी श्रुतिः ॥ ०२८ ॥

अन्यथा प्रतिपन्नास्तु विवृद्धाः स्वेषु कर्मसु ।
पुनरावृत्तिधर्माणस्ते भवन्तीह मानुषाः ॥ ०२९ ॥

पापयोनिं समापन्नाश्चण्डाला मूकचूचुकाः ।
वर्णान्पर्यायशश्चापि प्राप्नुवन्त्युत्तरोत्तरम् ॥ ०३० ॥

शूद्रयोनिमतिक्रम्य ये चान्ये तामसा गुणाः ।
स्रोतोमध्ये समागम्य वर्तन्ते तामसे गुणे ॥ ०३१ ॥

अभिषङ्गस्तु कामेषु महामोह इति स्मृतः ।
ऋषयो मुनयो देवा मुह्यन्त्यत्र सुखेप्सवः ॥ ०३२ ॥

तमो मोहो महामोहस्तामिस्रः क्रोधसञ्ज्ञितः ।
मरणं त्वन्धतामिस्रं तामिस्रं क्रोध उच्यते ॥ ०३३ ॥

भावतो गुणतश्चैव योनितश्चैव तत्त्वतः ।
सर्वमेतत्तमो विप्राः कीर्तितं वो यथाविधि ॥ ०३४ ॥

को न्वेतद्बुध्यते साधु को न्वेतत्साधु पश्यति ।
अतत्त्वे तत्त्वदर्शी यस्तमसस्तत्त्वलक्षणम् ॥ ०३५ ॥

तमोगुणा वो बहुधा प्रकीर्तिता ; यथावदुक्तं च तमः परावरम् ।
नरो हि यो वेद गुणानिमान्सदा ; स तामसैः सर्वगुणैः प्रमुच्यते ॥ ०३६ ॥

---

# अध्याय ०३७

ब्रह्मोवाच ॥

रजोऽहं वः प्रवक्ष्यामि याथातथ्येन सत्तमाः ।
निबोधत महाभागा गुणवृत्तं च सर्वशः ॥ ००१ ॥

संघातो रूपमायासः सुखदुःखे हिमातपौ ।

ऐश्वर्यं विग्रहः संधिर्हेतुवादोऽरतिः क्षमा ॥ ००२ ॥

बलं शौर्यं मदो रोषो व्यायामकलहावपि ।
ईर्ष्येप्सा पैशुनं युद्धं ममत्वं परिपालनम् ॥ ००३ ॥

वधबन्धपरिक्लेशाः क्रयो विक्रय एव च ।
निकृन्त छिन्धि भिन्धीति परमर्मावकर्तनम् ॥ ००४ ॥

उग्रं दारुणमाक्रोशः परवित्तानुशासनम् ।
लोकचिन्ता विचिन्ता च मत्सरः परिभाषणम् ॥ ००५ ॥

मृषावादो मृषादानं विकल्पः परिभाषणम् ।
निन्दा स्तुतिः प्रशंसा च प्रतापः परितर्पणम् ॥ ००६ ॥

परिचर्या च शुश्रूषा सेवा तृष्णा व्यपाश्रयः ।
व्यूहोऽनयः प्रमादश्च परितापः परिग्रहः ॥ ००७ ॥

संस्कारा ये च लोकेऽस्मिन्प्रवर्तन्ते पृथक्पृथक् ।
नृषु नारीषु भूतेषु द्रव्येषु शरणेषु च ॥ ००८ ॥

संतापोऽप्रत्ययश्चैव व्रतानि नियमाश्च ये ।
प्रदानमाशीर्युक्तं च सततं मे भवत्विति ॥ ००९ ॥

स्वधाकारो नमस्कारः स्वाहाकारो वषड्क्रिया ।
याजनाध्यापने चोभे तथैवाहुः परिग्रहम् ॥ ०१० ॥

इदं मे स्यादिदं मे स्यात्स्नेहो गुणसमुद्भवः ।
अभिद्रोहस्तथा माया निकृतिर्मान एव च ॥ ०११ ॥

स्तैन्यं हिंसा परीवादः परितापः प्रजागरः ।
स्तम्भो दम्भोऽथ रागश्च भक्तिः प्रीतिः प्रमोदनम् ॥ ०१२ ॥

द्यूतं च जनवादश्च संबन्धाः स्त्रीकृताश्च ये ।
नृत्तवादित्रगीतानि प्रसङ्गा ये च केचन ॥ ०१३ ॥

सर्व एते गुणा विप्रा राजसाः संप्रकीर्तिताः ॥ ०१३ ॥

भूतभव्यभविष्याणां भावानां भुवि भावनाः ।
त्रिवर्गनिरता नित्यं धर्मोऽर्थः काम इत्यपि ॥ ०१४ ॥

कामवृत्ताः प्रमोदन्ते सर्वकामसमृद्धिभिः ।
अर्वाक्स्रोतस इत्येते तैजसा रजसावृताः ॥ ०१५ ॥

अस्मि.णल्लोके प्रमोदन्ते जायमानाः पुनः पुनः ।
प्रेत्यभाविकमीहन्त इह लौकिकमेव च ॥ ०१६ ॥

ददति प्रतिगृह्णन्ति जपन्त्यथ च जुह्वति ॥ ०१६ ॥

रजोगुणा वो बहुधानुकीर्तिता ; यथावदुक्तं गुणवृत्तमेव च ।
नरो हि यो वेद गुणानिमान्सदा ; स राजसैः सर्वगुणैर्विमुच्यते ॥ ०१७ ॥

---

# अध्याय ०३८

ब्रह्मोवाच ॥

अतः परं प्रवक्ष्यामि तृतीयं गुणमुत्तमम् ।
सर्वभूतहितं लोके सतां धर्ममनिन्दितम् ॥ ००१ ॥

आनन्दः प्रीतिरुद्रेकः प्राकाश्यं सुखमेव च ।
अकार्पण्यमसंरम्भः संतोषः श्रद्दधानता ॥ ००२ ॥

क्षमा धृतिरहिंसा च समता सत्यमार्जवम् ।
अक्रोधश्चानसूया च शौचं दाक्ष्यं पराक्रमः ॥ ००३ ॥

मुधा ज्ञानं मुधा वृत्तं मुधा सेवा मुधा श्रमः ।
एवं यो युक्तधर्मः स्यात्सोऽमुत्रानन्त्यमश्नुते ॥ ००४ ॥

निर्ममो निरहङ्कारो निराशीः सर्वतः समः ।
अकामहत इत्येष सतां धर्मः सनातनः ॥ ००५ ॥

विश्रम्भो ह्रीस्तितिक्षा च त्यागः शौचमतन्द्रिता ।
आनृशंस्यमसंमोहो दया भूतेष्वपैशुनम् ॥ ००६ ॥

हर्षस्तुष्टिर्विस्मयश्च विनयः साधुवृत्तता ।
शान्तिकर्म विशुद्धिश्च शुभा बुद्धिर्विमोचनम् ॥ ००७ ॥

उपेक्षा ब्रह्मचर्यं च परित्यागश्च सर्वशः ।
निर्ममत्वमनाशीस्त्वमपरिक्रीतधर्मता ॥ ००८ ॥

मुधा दानं मुधा यज्ञो मुधाधीतं मुधा व्रतम् ।
मुधा प्रतिग्रहश्चैव मुधा धर्मो मुधा तपः ॥ ००९ ॥

एवंवृत्तास्तु ये केचिल्लोकेऽस्मिन्सत्त्वसंश्रयाः ।
ब्राह्मणा ब्रह्मयोनिस्थास्ते धीराः साधुदर्शिनः ॥ ०१० ॥

हित्वा सर्वाणि पापानि निःशोका ह्यजरामराः ।
दिवं प्राप्य तु ते धीराः कुर्वते वै ततस्ततः ॥ ०११ ॥

ईशित्वं च वशित्वं च लघुत्वं मनसश्च ते ।

विकुर्वते महात्मानो देवास्त्रिदिवगा इव ॥ ०१२ ॥

ऊर्ध्वस्रोतस इत्येते देवा वैकारिकाः स्मृताः ।
विकुर्वते प्रकृत्या वै दिवं प्राप्तास्ततस्ततः ॥ ०१३ ॥

यद्यदिच्छन्ति तत्सर्वं भजन्ते विभजन्ति च ॥ ०१३ ॥

इत्येतत्सात्त्विकं वृत्तं कथितं वो द्विजर्षभाः ।
एतद्विज्ञाय विधिवल्लभते यद्यदिच्छति ॥ ०१४ ॥

प्रकीर्तिताः सत्त्वगुणा विशेषतो ; यथावदुक्तं गुणवृत्तमेव च ।
नरस्तु यो वेद गुणानिमान्सदा ; गुणान्स भुङ्क्ते न गुणैः स भुज्यते ॥ ०१५ ॥

---

# अध्याय ०३९

ब्रह्मोवाच ॥

नैव शक्या गुणा वक्तुं पृथक्त्वेनेह सर्वशः ।
अविच्छिन्नानि दृश्यन्ते रजः सत्त्वं तमस्तथा ॥ ००१ ॥

अन्योन्यमनुषज्जन्ते अन्योन्यं चानुजीविनः ।
अन्योन्यापाश्रयाः सर्वे तथान्योन्यानुवर्तिनः ॥ ००२ ॥

यावत्सत्त्वं तमस्तावद्वर्तते नात्र संशयः ।
यावत्तमश्च सत्त्वं च रजस्तावदिहोच्यते ॥ ००३ ॥

संहत्य कुर्वते यात्रां सहिताः संघचारिणः ।
संघातवृत्तयो ह्येते वर्तन्ते हेत्वहेतुभिः ॥ ००४ ॥

उद्रेकव्यतिरेकाणां तेषामन्योन्यवर्तिनाम् ।
वर्तते तद्यथान्यूनं व्यतिरिक्तं च सर्वशः ॥ ००५ ॥

व्यतिरिक्तं तमो यत्र तिर्यग्भावगतं भवेत् ।
अल्पं तत्र रजो ज्ञेयं सत्त्वं चाल्पतरं ततः ॥ ००६ ॥

उद्रिक्तं च रजो यत्र मध्यस्रोतोगतं भवेत् ।
अल्पं तत्र तमो ज्ञेयं सत्त्वं चाल्पतरं ततः ॥ ००७ ॥

उद्रिक्तं च यदा सत्त्वमूर्ध्वस्रोतोगतं भवेत् ।
अल्पं तत्र रजो ज्ञेयं तमश्चाल्पतरं ततः ॥ ००८ ॥

सत्त्वं वैकारिकं योनिरिन्द्रियाणां प्रकाशिका ।
न हि सत्त्वात्परो भावः कश्चिदन्यो विधीयते ॥ ००९ ॥

ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणसंयुक्ता यान्त्यधस्तामसा जनाः ॥ ०१० ॥

तमः शूद्रे रजः क्षत्रे ब्राह्मणे सत्त्वमुत्तमम् ।
इत्येवं त्रिषु वर्णेषु विवर्तन्ते गुणास्त्रयः ॥ ०११ ॥

दूरादपि हि दृश्यन्ते सहिताः संघचारिणः ।
तमः सत्त्वं रजश्चैव पृथक्त्वं नानुशुश्रुम ॥ ०१२ ॥

दृष्ट्वा चादित्यमुद्यन्तं कुचोराणां भयं भवेत् ।
अध्वगाः परितप्येरंस्तृष्णार्ता दुःखभागिनः ॥ ०१३ ॥

आदित्यः सत्त्वमुद्दिष्टं कुचोरास्तु यथा तमः ।
परितापोऽध्वगानां च राजसो गुण उच्यते ॥ ०१४ ॥

प्राकाश्यं सत्त्वमादित्ये संतापो राजसो गुणः ।
उपप्लवस्तु विज्ञेयस्तामसस्तस्य पर्वसु ॥ ०१५ ॥

एवं ज्योतिःषु सर्वेषु विवर्तन्ते गुणास्त्रयः ।
पर्यायेण च वर्तन्ते तत्र तत्र तथा तथा ॥ ०१६ ॥

स्थावरेषु च भूतेषु तिर्यग्भावगतं तमः ।
राजसास्तु विवर्तन्ते स्नेहभावस्तु सात्त्विकः ॥ ०१७ ॥

अहस्त्रिधा तु विज्ञेयं त्रिधा रात्रिर्विधीयते ।
मासार्धमासवर्षाणि ऋतवः संधयस्तथा ॥ ०१८ ॥

त्रिधा दानानि दीयन्ते त्रिधा यज्ञः प्रवर्तते ।
त्रिधा लोकास्त्रिधा वेदास्त्रिधा विद्यास्त्रिधा गतिः ॥ ०१९ ॥

भूतं भव्यं भविष्यच्च धर्मोऽर्थः काम इत्यपि ।
प्राणापानावुदानश्चाप्येत एव त्रयो गुणाः ॥ ०२० ॥

यत्किञ्चिदिह वै लोके सर्वमेष्वेव तत्त्रिषु ।
त्रयो गुणाः प्रवर्तन्ते अव्यक्ता नित्यमेव तु ॥ ०२१ ॥

सत्त्वं रजस्तमश्चैव गुणसर्गः सनातनः ॥ ०२१ ॥

तमोऽव्यक्तं शिवं नित्यमजं योनिः सनातनः ।
प्रकृतिर्विकारः प्रलयः प्रधानं प्रभवाप्ययौ ॥ ०२२ ॥

अनुद्रिक्तमनूनं च ह्यकम्पमचलं ध्रुवम् ।
सदसच्चैव तत्सर्वमव्यक्तं त्रिगुणं स्मृतम् ॥ ०२३ ॥

ज्ञेयानि नामधेयानि नरैरध्यात्मचिन्तकैः ॥ ०२३ ॥

अव्यक्तनामानि गुणांश्च तत्त्वतो ; यो वेद सर्वाणि गतीश्च केवलाः ।
विमुक्तदेहः प्रविभागतत्त्ववि ;त्स मुच्यते सर्वगुणैर्निरामयः ॥ ०२४ ॥

---

# अध्याय ०४०

ब्रह्मोवाच ॥

अव्यक्तात्पूर्वमुत्पन्नो महानात्मा महामतिः ।
आदिर्गुणानां सर्वेषां प्रथमः सर्ग उच्यते ॥ ००१ ॥

महानात्मा मतिर्विष्णुर्विश्वः शंभुश्च वीर्यवान् ।
बुद्धिः प्रज्ञोपलब्धिश्च तथा ख्यातिर्धृतिः स्मृतिः ॥ ००२ ॥

पर्यायवाचकैः शब्दैर्महानात्मा विभाव्यते ।
तं जानन्ब्राह्मणो विद्वान्न प्रमोहं निगच्छति ॥ ००३ ॥

सर्वतःपाणिपादश्च सर्वतोक्षिशिरोमुखः ।
सर्वतःश्रुतिमा.ल्लोके सर्वं व्याप्य स तिष्ठति ॥ ००४ ॥

महाप्रभार्चिः पुरुषः सर्वस्य हृदि निश्रितः ।
अणिमा लघिमा प्राप्तिरीशानो ज्योतिरव्ययः ॥ ००५ ॥

तत्र बुद्धिमतां लोकाः संन्यासनिरताश्च ये ।
ध्यानिनो नित्ययोगाश्च सत्यसंधा जितेन्द्रियाः ॥ ००६ ॥

ज्ञानवन्तश्च ये केचिदलुब्धा जितमन्यवः ।
प्रसन्नमनसो धीरा निर्ममा निरहङ्कृताः ॥ ००७ ॥

विमुक्ताः सर्वं एवैते महत्त्वमुपयान्ति वै ॥ ००७ ॥

आत्मनो महतो वेद यः पुण्यां गतिमुत्तमाम् ।
स धीरः सर्वलोकेषु न मोहमधिगच्छति ॥ ००८ ॥

विष्णुरेवादिसर्गेषु स्वयंभूर्भवति प्रभुः ॥ ००८ ॥

एवं हि यो वेद गुहाशयं प्रभुं ; नरः पुराणं पुरुषं विश्वरूपम् ।
हिरण्मयं बुद्धिमतां परां गतिं ; स बुद्धिमान्बुद्धिमतीत्य तिष्ठति ॥ ००९ ॥

---

# अध्याय ०४१

ब्रह्मोवाच ॥

य उत्पन्नो महान्पूर्वमहङ्कारः स उच्यते ।
अहमित्येव संभूतो द्वितीयः सर्ग उच्यते ॥ ००१ ॥

अहङ्कारश्च भूतादिर्वैकारिक इति स्मृतः ।
तेजसश्चेतना धातुः प्रजासर्गः प्रजापतिः ॥ ००२ ॥

देवानां प्रभवो देवो मनसश्च त्रिलोककृत् ।
अहमित्येव तत्सर्वमभिमन्ता स उच्यते ॥ ००३ ॥

अध्यात्मज्ञाननित्यानां मुनीनां भावितात्मनाम् ।
स्वाध्यायक्रतुसिद्धानामेष लोकः सनातनः ॥ ००४ ॥

अहङ्कारेणाहरतो गुणानिमा ;न्भूतादिरेवं सृजते स भूतकृत् ।
वैकारिकः सर्वमिदं विचेष्टते ; स्वतेजसा रञ्जयते जगत्तथा ॥ ००५ ॥

---

# अध्याय ०४२

ब्रह्मोवाच ॥

अहङ्कारात्प्रसूतानि महाभूतानि पञ्च वै ।
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ॥ ००१ ॥

तेषु भूतानि मुह्यन्ते महाभूतेषु पञ्चसु ।
शब्दस्पर्शनरूपेषु रसगन्धक्रियासु च ॥ ००२ ॥

महाभूतविनाशान्ते प्रलये प्रत्युपस्थिते ।
सर्वप्राणभृतां धीरा महदुत्पद्यते भयम् ॥ ००३ ॥

यद्यस्माज्जायते भूतं तत्र तत्प्रविलीयते ।
लीयन्ते प्रतिलोमानि जायन्ते चोत्तरोत्तरम् ॥ ००४ ॥

ततः प्रलीने सर्वस्मिन्भूते स्थावरजङ्गमे ।
स्मृतिमन्तस्तदा धीरा न लीयन्ते कदाचन ॥ ००५ ॥

शब्दः स्पर्शस्तथा रूपं रसो गन्धश्च पञ्चमः ।
क्रियाकारणयुक्ताः स्युरनित्या मोहसञ्ज्ञिताः ॥ ००६ ॥

लोभप्रजनसंयुक्ता निर्विशेषा ह्यकिञ्चनाः ।
मांसशोणितसंघाता अन्योन्यस्योपजीविनः ॥ ००७ ॥

बहिरात्मान इत्येते दीनाः कृपणवृत्तयः ।
प्राणापानावुदानश्च समानो व्यान एव च ॥ ००८ ॥

अन्तरात्मेति चाप्येते नियताः पञ्च वायवः ।
वाङ्मनोबुद्धिरित्येभिः सार्धमष्टात्मकं जगत् ॥ ००९ ॥

त्वग्घ्राणश्रोत्रचक्षूंषि रसनं वाक्च संयता ।
विशुद्धं च मनो यस्य बुद्धिश्चाव्यभिचारिणी ॥ ०१० ॥

अष्टौ यस्याग्नयो ह्येते न दहन्ते मनः सदा ।
स तद्ब्रह्म शुभं याति यस्माद्भूयो न विद्यते ॥ ०११ ॥

एकादश च यान्याहुरिन्द्रियाणि विशेषतः ।
अहङ्कारप्रसूतानि तानि वक्ष्याम्यहं द्विजाः ॥ ०१२ ॥

श्रोत्रं त्वक्चक्षुषी जिह्वा नासिका चैव पञ्चमी ।
पादौ पायुरुपस्थं च हस्तौ वाग्दशमी भवेत् ॥ ०१३ ॥

इन्द्रियग्राम इत्येष मन एकादशं भवेत् ।
एतं ग्रामं जयेत्पूर्वं ततो ब्रह्म प्रकाशते ॥ ०१४ ॥

बुद्धीन्द्रियाणि पञ्चाहुः पञ्च कर्मेन्द्रियाणि च ।
श्रोत्रादीन्यपि पञ्चाहुर्बुद्धियुक्तानि तत्त्वतः ॥ ०१५ ॥

अविशेषाणि चान्यानि कर्मयुक्तानि तानि तु ।
उभयत्र मनो ज्ञेयं बुद्धिर्द्वादशमी भवेत् ॥ ०१६ ॥

इत्युक्तानीन्द्रियाणीमान्येकादश मया क्रमात् ।
मन्यन्ते कृतमित्येव विदित्वैतानि पण्डिताः ॥ ०१७ ॥

त्रीणि स्थानानि भूतानां चतुर्थं नोपपद्यते ।

स्थलमापस्तथाकाशं जन्म चापि चतुर्विधम् ॥ ०१८ ॥

अण्डजोद्भिज्जसंस्वेदजरायुजमथापि च ।
चतुर्धा जन्म इत्येतद्भूतग्रामस्य लक्ष्यते ॥ ०१९ ॥

अचराण्यपि भूतानि खेचराणि तथैव च ।
अण्डजानि विजानीयात्सर्वांश्चैव सरीसृपान् ॥ ०२० ॥

संस्वेदाः कृमयः प्रोक्ता जन्तवश्च तथाविधाः ।
जन्म द्वितीयमित्येतज्जघन्यतरमुच्यते ॥ ०२१ ॥

भित्त्वा तु पृथिवीं यानि जायन्ते कालपर्ययात् ।
उद्भिज्जानीति तान्याहुर्भूतानि द्विजसत्तमाः ॥ ०२२ ॥

द्विपादबहुपादानि तिर्यग्गतिमतीनि च ।
जरायुजानि भूतानि वित्त तान्यपि सत्तमाः ॥ ०२३ ॥

द्विविधापीह विज्ञेया ब्रह्मयोनिः सनातना ।
तपः कर्म च यत्पुण्यमित्येष विदुषां नयः ॥ ०२४ ॥

द्विविधं कर्म विज्ञेयमिज्या दानं च यन्मखे ।
जातस्याध्ययनं पुण्यमिति वृद्धानुशासनम् ॥ ०२५ ॥

एतद्यो वेद विधिवत्स मुक्तः स्याद्द्विजर्षभाः ।
विमुक्तः सर्वपापेभ्य इति चैव निबोधत ॥ ०२६ ॥

आकाशं प्रथमं भूतं श्रोत्रमध्यात्ममुच्यते ।
अधिभूतं तथा शब्दो दिशस्तत्राधिदैवतम् ॥ ०२७ ॥

द्वितीयं मारुतो भूतं त्वगध्यात्मं च विश्रुतम् ।
स्प्रष्टव्यमधिभूतं च विद्युत्तत्राधिदैवतम् ॥ ०२८ ॥

तृतीयं ज्योतिरित्याहुश्चक्षुरध्यात्ममुच्यते ।
अधिभूतं ततो रूपं सूर्यस्तत्राधिदैवतम् ॥ ०२९ ॥

चतुर्थमापो विज्ञेयं जिह्वा चाध्यात्ममिष्यते ।
अधिभूतं रसश्चात्र सोमस्तत्राधिदैवतम् ॥ ०३० ॥

पृथिवी पञ्चमं भूतं घ्राणश्चाध्यात्ममिष्यते ।
अधिभूतं तथा गन्धो वायुस्तत्राधिदैवतम् ॥ ०३१ ॥

एष पञ्चसु भूतेषु चतुष्टयविधिः स्मृतः ।
अतः परं प्रवक्ष्यामि सर्वं त्रिविधमिन्द्रियम् ॥ ०३२ ॥

पादावध्यात्ममित्याहुर्ब्राह्मणास्तत्त्वदर्शिनः ।
अधिभूतं तु गन्तव्यं विष्णुस्तत्राधिदैवतम् ॥ ०३३ ॥

अवाग्गतिरपानश्च पायुरध्यात्ममिष्यते ।
अधिभूतं विसर्गश्च मित्रस्तत्राधिदैवतम् ॥ ०३४ ॥

प्रजनः सर्वभूतानामुपस्थोऽध्यात्ममुच्यते ।
अधिभूतं तथा शुक्रं दैवतं च प्रजापतिः ॥ ०३५ ॥

हस्तावध्यात्ममित्याहुरध्यात्मविदुषो जनाः ।
अधिभूतं तु कर्माणि शक्रस्तत्राधिदैवतम् ॥ ०३६ ॥

वैश्वदेवी मनःपूर्वा वागध्यात्ममिहोच्यते ।
वक्तव्यमधिभूतं च वह्निस्तत्राधिदैवतम् ॥ ०३७ ॥

अध्यात्मं मन इत्याहुः पञ्चभूतानुचारकम् ।
अधिभूतं च मन्तव्यं चन्द्रमाश्चाधिदैवतम् ॥ ०३८ ॥

अध्यात्मं बुद्धिरित्याहुः षडिन्द्रियविचारिणी ।
अधिभूतं तु विज्ञेयं ब्रह्मा तत्राधिदैवतम् ॥ ०३९ ॥

यथावदध्यात्मविधिरेष वः कीर्तितो मया ।
ज्ञानमस्य हि धर्मज्ञाः प्राप्तं बुद्धिमतामिह ॥ ०४० ॥

इन्द्रियाणीन्द्रियार्थाश्च महाभूतानि पञ्च च ।
सर्वाण्येतानि संधाय मनसा संप्रधारयेत् ॥ ०४१ ॥

क्षीणे मनसि सर्वस्मिन्न जन्मसुखमिष्यते ।
ज्ञानसंपन्नसत्त्वानां तत्सुखं विदुषां मतम् ॥ ०४२ ॥

अतः परं प्रवक्ष्यामि सूक्ष्मभावकरीं शिवाम् ।
निवृत्तिं सर्वभूतेषु मृदुना दारुणेन वा ॥ ०४३ ॥

गुणागुणमनासङ्गमेकचर्यमनन्तरम् ।
एतद्ब्राह्मणतो वृत्तमाहुरेकपदं सुखम् ॥ ०४४ ॥

विद्वान्कूर्म इवाङ्गानि कामान्संहृत्य सर्वशः ।
विरजाः सर्वतो मुक्तो यो नरः स सुखी सदा ॥ ०४५ ॥

कामानात्मनि संयम्य क्षीणतृष्णः समाहितः ।
सर्वभूतसुहृन्मैत्रो ब्रह्मभूयं स गच्छति ॥ ०४६ ॥

इन्द्रियाणां निरोधेन सर्वेषां विषयैषिणाम् ।
मुनेर्जनपदत्यागादध्यात्माग्निः समिध्यते ॥ ०४७ ॥

यथाग्निरिन्धनैरिद्धो महाज्योतिः प्रकाशते ।
तथेन्द्रियनिरोधेन महानात्मा प्रकाशते ॥ ०४८ ॥

यदा पश्यति भूतानि प्रसन्नात्मात्मनो हृदि ।

स्वयंयोनिस्तदा सूक्ष्मात्सूक्ष्ममाप्नोत्यनुत्तमम् ॥ ०४९ ॥

अग्नी रूपं पयः स्रोतो वायुः स्पर्शनमेव च ।
मही पङ्कधरं घोरमाकाशं श्रवणं तथा ॥ ०५० ॥

रागशोकसमाविष्टं पञ्चस्रोतःसमावृतम् ।
पञ्चभूतसमायुक्तं नवद्वारं द्विदैवतम् ॥ ०५१ ॥

रजस्वलमथादृश्यं त्रिगुणं च त्रिधातुकम् ।
संसर्गाभिरतं मूढं शरीरमिति धारणा ॥ ०५२ ॥

दुश्चरं जीवलोकेऽस्मिन्सत्त्वं प्रति समाश्रितम् ।
एतदेव हि लोकेऽस्मिन्कालचक्रं प्रवर्तते ॥ ०५३ ॥

एतन्महार्णवं घोरमगाधं मोहसञ्ज्ञितम् ।
विसृजेत्सङ्क्षिपेच्चैव बोधयेत्सामरं जगत् ॥ ०५४ ॥

कामक्रोधौ भयं मोहमभिद्रोहमथानृतम् ।
इन्द्रियाणां निरोधेन स तांस्त्यजति दुस्त्यजान् ॥ ०५५ ॥

यस्यैते निर्जिता लोके त्रिगुणाः पञ्च धातवः ।
व्योम्नि तस्य परं स्थानमनन्तमथ लक्ष्यते ॥ ०५६ ॥

कामकूलामपारान्तां मनःस्रोतोभयावहाम् ।
नदीं दुर्गह्रदां तीर्णः कामक्रोधावुभौ जयेत् ॥ ०५७ ॥

स सर्वदोषनिर्मुक्तस्ततः पश्यति यत्परम् ।
मनो मनसि संधाय पश्यत्यात्मानमात्मनि ॥ ०५८ ॥

सर्ववित्सर्वभूतेषु वीक्षत्यात्मानमात्मनि ।
एकधा बहुधा चैव विकुर्वाणस्ततस्ततः ॥ ०५९ ॥

ध्रुवं पश्यति रूपाणि दीपाद्दीपशतं यथा ।
स वै विष्णुश्च मित्रश्च वरुणोऽग्निः प्रजापतिः ॥ ०६० ॥

स हि धाता विधाता च स प्रभुः सर्वतोमुखः ।
हृदयं सर्वभूतानां महानात्मा प्रकाशते ॥ ०६१ ॥

तं विप्रसंघाश्च सुरासुराश्च ; यक्षाः पिशाचाः पितरो वयांसि ।
रक्षोगणा भूतगणाश्च सर्वे ; महर्षयश्चैव सदा स्तुवन्ति ॥ ०६२ ॥

---

# अध्याय ०४३

ब्रह्मोवाच ॥

मनुष्याणां तु राजन्यः क्षत्रियो मध्यमो गुणः ।
कुञ्जरो वाहनानां च सिंहश्चारण्यवासिनाम् ॥ ००१ ॥

अविः पशूनां सर्वेषामाखुश्च बिलवासिनाम् ।
गवां गोवृषभश्चैव स्त्रीणां पुरुष एव च ॥ ००२ ॥

न्यग्रोधो जम्बुवृक्षश्च पिप्पलः शाल्मलिस्तथा ।
शिंशपा मेषशृङ्गश्च तथा कीचकवेणवः ॥ ००३ ॥

एते द्रुमाणां राजानो लोकेऽस्मिन्नात्र संशयः ॥ ००३ ॥

हिमवान्पारियात्रश्च सह्यो विन्ध्यस्त्रिकूटवान् ।
श्वेतो नीलश्च भासश्च काष्ठवांश्चैव पर्वतः ॥ ००४ ॥

शुभस्कन्धो महेन्द्रश्च माल्यवान्पर्वतस्तथा ।
एते पर्वतराजानो गणानां मरुतस्तथा ॥ ००५ ॥

सूर्यो ग्रहाणामधिपो नक्षत्राणां च चन्द्रमाः ।
यमः पितृणामधिपः सरितामथ सागरः ॥ ००६ ॥

अम्भसां वरुणो राजा सत्त्वानां मित्र उच्यते ।
अर्कोऽधिपतिरुष्णानां ज्योतिषामिन्दुरुच्यते ॥ ००७ ॥

अग्निर्भूतपतिर्नित्यं ब्राह्मणानां बृहस्पतिः ।
ओषधीनां पतिः सोमो विष्णुर्बलवतां वरः ॥ ००८ ॥

त्वष्टाधिराजो रूपाणां पशूनामीश्वरः शिवः ।
दक्षिणानां तथा यज्ञो वेदानामृषयस्तथा ॥ ००९ ॥

दिशामुदीची विप्राणां सोमो राजा प्रतापवान् ।
कुबेरः सर्वयक्षाणां देवतानां पुरंदरः ॥ ०१० ॥

एष भूतादिकः सर्गः प्रजानां च प्रजापतिः ॥ ०१० ॥

सर्वेषामेव भूतानामहं ब्रह्ममयो महान् ।
भूतं परतरं मत्तो विष्णोर्वापि न विद्यते ॥ ०११ ॥

राजाधिराजः सर्वासां विष्णुर्ब्रह्ममयो महान् ।
ईश्वरं तं विजानीमः स विभुः स प्रजापतिः ॥ ०१२ ॥

नरकिंनरयक्षाणां गन्धर्वोरगरक्षसाम् ।
देवदानवनागानां सर्वेषामीश्वरो हि सः ॥ ०१३ ॥

भगदेवानुयातानां सर्वासां वामलोचना ।

माहेश्वरी महादेवी प्रोच्यते पार्वतीति या ॥ ०१४ ॥

उमां देवीं विजानीत नारीणामुत्तमां शुभाम् ।
रतीनां वसुमत्यस्तु स्त्रीणामप्सरसस्तथा ॥ ०१५ ॥

धर्मकामाश्च राजानो ब्राह्मणा धर्मलक्षणाः ।
तस्माद्राजा द्विजातीनां प्रयतेतेह रक्षणे ॥ ०१६ ॥

राज्ञां हि विषये येषामवसीदन्ति साधवः ।
हीनास्ते स्वगुणैः सर्वैः प्रेत्यावाङ्मार्गगामिनः ॥ ०१७ ॥

राज्ञां तु विषये येषां साधवः परिरक्षिताः ।
तेऽस्मि.ण्ल्लोके प्रमोदन्ते प्रेत्य चानन्त्यमेव च ॥ ०१८ ॥

प्राप्नुवन्ति महात्मान इति वित्त द्विजर्षभाः ॥ ०१८ ॥

अत ऊर्ध्वं प्रवक्ष्यामि नियतं धर्मलक्षणम् ।
अहिंसालक्षणो धर्मो हिंसा चाधर्मलक्षणा ॥ ०१९ ॥

प्रकाशलक्षणा देवा मनुष्याः कर्मलक्षणाः ।
शब्दलक्षणमाकाशं वायुस्तु स्पर्शलक्षणः ॥ ०२० ॥

ज्योतिषां लक्षणं रूपमापश्च रसलक्षणाः ।
धरणी सर्वभूतानां पृथिवी गन्धलक्षणा ॥ ०२१ ॥

स्वरव्यञ्जनसंस्कारा भारती सत्यलक्षणा ।
मनसो लक्षणं चिन्ता तथोक्ता बुद्धिरन्वयात् ॥ ०२२ ॥

मनसा चिन्तयानोऽर्थान्बुद्ध्या चैव व्यवस्यति ।
बुद्धिर्हि व्यवसायेन लक्ष्यते नात्र संशयः ॥ ०२३ ॥

लक्षणं महतो ध्यानमव्यक्तं साधुलक्षणम् ।
प्रवृत्तिलक्षणो योगो ज्ञानं संन्यासलक्षणम् ॥ ०२४ ॥

तस्माज्ज्ञानं पुरस्कृत्य संन्यसेदिह बुद्धिमान् ।
संन्यासी ज्ञानसंयुक्तः प्राप्नोति परमां गतिम् ॥ ०२५ ॥

अतीतोऽद्वंद्वमभ्येति तमोमृत्युजरातिगम् ॥ ०२५ ॥

धर्मलक्षणसंयुक्तमुक्तं वो विधिवन्मया ।
गुणानां ग्रहणं सम्यग्वक्ष्याम्यहमतः परम् ॥ ०२६ ॥

पार्थिवो यस्तु गन्धो वै घ्राणेनेह स गृह्यते ।
घ्राणस्थश्च तथा वायुर्गन्धज्ञाने विधीयते ॥ ०२७ ॥

अपां धातुरसो नित्यं जिह्वया स तु गृह्यते ।
जिह्वास्थश्च तथा सोमो रसज्ञाने विधीयते ॥ ०२८ ॥

ज्योतिषश्च गुणो रूपं चक्षुषा तच्च गृह्यते ।
चक्षुःस्थश्च तथादित्यो रूपज्ञाने विधीयते ॥ ०२९ ॥

वायव्यस्तु तथा स्पर्शस्त्वचा प्रज्ञायते च सः ।
त्वक्स्थश्चैव तथा वायुः स्पर्शज्ञाने विधीयते ॥ ०३० ॥

आकाशस्य गुणो घोषः श्रोत्रेण स तु गृह्यते ।
श्रोत्रस्थाश्च दिशः सर्वाः शब्दज्ञाने प्रकीर्तिताः ॥ ०३१ ॥

मनसस्तु गुणश्चिन्ता प्रज्ञया स तु गृह्यते ।
हृदिस्थचेतनाधातुर्मनोज्ञाने विधीयते ॥ ०३२ ॥

बुद्धिरध्यवसायेन ध्यानेन च महांस्तथा ।
निश्चित्य ग्रहणं नित्यमव्यक्तं नात्र संशयः ॥ ०३३ ॥

अलिङ्गग्रहणो नित्यः क्षेत्रज्ञो निर्गुणात्मकः ।
तस्मादलिङ्गः क्षेत्रज्ञः केवलं ज्ञानलक्षणः ॥ ०३४ ॥

अव्यक्तं क्षेत्रमुद्दिष्टं गुणानां प्रभवाप्ययम् ।
सदा पश्याम्यहं लीनं विजानामि शृणोमि च ॥ ०३५ ॥

पुरुषस्तद्विजानीते तस्मात्क्षेत्रज्ञ उच्यते ।
गुणवृत्तं तथा कृत्स्नं क्षेत्रज्ञः परिपश्यति ॥ ०३६ ॥

आदिमध्यावसानान्तं सृज्यमानमचेतनम् ।
न गुणा विदुरात्मानं सृज्यमानं पुनः पुनः ॥ ०३७ ॥

न सत्यं वेद वै कश्चित्क्षेत्रज्ञस्त्वेव विन्दति ।
गुणानां गुणभूतानां यत्परं परतो महत् ॥ ०३८ ॥

तस्माद्गुणांश्च तत्त्वं च परित्यज्येह तत्त्ववित् ।
क्षीणदोषो गुणान्हित्वा क्षेत्रज्ञं प्रविशत्यथ ॥ ०३९ ॥

निर्द्वंद्वो निर्नमस्कारो निःस्वधाकार एव च ।
अचलश्चानिकेतश्च क्षेत्रज्ञः स परो विभुः ॥ ०४० ॥

---

# अध्याय ०४४

ब्रह्मोवाच ॥

यदादिमध्यपर्यन्तं ग्रहणोपायमेव च ।
नामलक्षणसंयुक्तं सर्वं वक्ष्यामि तत्त्वतः ॥ ००१ ॥

अहः पूर्वं ततो रात्रिर्मासाः शुक्लादयः स्मृताः ।
श्रविष्ठादीनि ऋक्षाणि ऋतवः शिशिरादयः ॥ ००२ ॥

भूमिरादिस्तु गन्धानां रसानामाप एव च ।
रूपाणां ज्योतिरादिस्तु स्पर्शादिर्वायुरुच्यते ॥ ००३ ॥

शब्दस्यादिस्तथाकाशमेष भूतकृतो गुणः ॥ ००३ ॥

अतः परं प्रवक्ष्यामि भूतानामादिमुत्तमम् ।
आदित्यो ज्योतिषामादिरग्निर्भूतादिरिष्यते ॥ ००४ ॥

सावित्री सर्वविद्यानां देवतानां प्रजापतिः ।
ओङ्कारः सर्ववेदानां वचसां प्राण एव च ॥ ००५ ॥

यद्यस्मिन्नियतं लोके सर्वं सावित्रमुच्यते ॥ ००५ ॥

गायत्री छन्दसामादिः पशूनामज उच्यते ।
गावश्चतुष्पदामादिर्मनुष्याणां द्विजातयः ॥ ००६ ॥

श्येनः पतत्रिणामादिर्यज्ञानां हुतमुत्तमम् ।
परिसर्पिणां तु सर्वेषां ज्येष्ठः सर्पो द्विजोत्तमाः ॥ ००७ ॥

कृतमादिर्युगानां च सर्वेषां नात्र संशयः ।
हिरण्यं सर्वरत्नानामोषधीनां यवास्तथा ॥ ००८ ॥

सर्वेषां भक्ष्यभोज्यानामन्नं परममुच्यते ।
द्रवाणां चैव सर्वेषां पेयानामाप उत्तमाः ॥ ००९ ॥

स्थावराणां च भूतानां सर्वेषामविशेषतः ।
ब्रह्मक्षेत्रं सदा पुण्यं प्लक्षः प्रथमजः स्मृतः ॥ ०१० ॥

अहं प्रजापतीनां च सर्वेषां नात्र संशयः ।
मम विष्णुरचिन्त्यात्मा स्वयंभूरिति स स्मृतः ॥ ०११ ॥

पर्वतानां महामेरुः सर्वेषामग्रजः स्मृतः ।
दिशां च प्रदिशां चोर्ध्वा दिग्जाता प्रथमं तथा ॥ ०१२ ॥

तथा त्रिपथगा गङ्गा नदीनामग्रजा स्मृता ।
तथा सरोदपानानां सर्वेषां सागरोऽग्रजः ॥ ०१३ ॥

देवदानवभूतानां पिशाचोरगरक्षसाम् ।
नरकिंनरयक्षाणां सर्वेषामीश्वरः प्रभुः ॥ ०१४ ॥

आदिर्विश्वस्य जगतो विष्णुर्ब्रह्ममयो महान् ।
भूतं परतरं तस्मात्त्रैलोक्ये नेह विद्यते ॥ ०१५ ॥

आश्रमाणां च गार्हस्थ्यं सर्वेषां नात्र संशयः ।
लोकानामादिरव्यक्तं सर्वस्यान्तस्तदेव च ॥ ०१६ ॥

अहान्यस्तमयान्तानि उदयान्ता च शर्वरी ।
सुखस्यान्तः सदा दुःखं दुःखस्यान्तः सदा सुखम् ॥ ०१७ ॥

सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ।
संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम् ॥ ०१८ ॥

सर्वं कृतं विनाशान्तं जातस्य मरणं ध्रुवम् ।
अशाश्वतं हि लोकेऽस्मिन्सर्वं स्थावरजङ्गमम् ॥ ०१९ ॥

इष्टं दत्तं तपोऽधीतं व्रतानि नियमाश्च ये ।
सर्वमेतद्विनाशान्तं ज्ञानस्यान्तो न विद्यते ॥ ०२० ॥

तस्माज्ज्ञानेन शुद्धेन प्रसन्नात्मा समाहितः ।
निर्ममो निरहङ्कारो मुच्यते सर्वपाप्मभिः ॥ ०२१ ॥

---

# अध्याय ०४५

ब्रह्मोवाच ॥

बुद्धिसारं मनस्तम्भमिन्द्रियग्रामबन्धनम् ।
महाभूतारविष्कम्भं निमेषपरिवेष्टनम् ॥ ००१ ॥

जराशोकसमाविष्टं व्याधिव्यसनसञ्चरम् ।
देशकालविचारीदं श्रमव्यायामनिस्वनम् ॥ ००२ ॥

अहोरात्रपरिक्षेपं शीतोष्णपरिमण्डलम् ।
सुखदुःखान्तसङ्क्लेशं क्षुत्पिपासावकीलनम् ॥ ००३ ॥

छायातपविलेखं च निमेषोन्मेषविह्वलम् ।
घोरमोहजनाकीर्णं वर्तमानमचेतनम् ॥ ००४ ॥

मासार्धमासगणितं विषमं लोकसञ्चरम् ।
तमोनिचयपङ्कं च रजोवेगप्रवर्तकम् ॥ ००५ ॥

सत्त्वालङ्कारदीप्तं च गुणसंघातमण्डलम् ।
स्वरविग्रहनाभीकं शोकसंघातवर्तनम् ॥ ००६ ॥

क्रियाकारणसंयुक्तं रागविस्तारमायतम् ।
लोभेप्सापरिसंख्यातं विविक्तज्ञानसंभवम् ॥ ००७ ॥

भयमोहपरीवारं भूतसंमोहकारकम् ।
आनन्दप्रीतिधारं च कामक्रोधपरिग्रहम्  ॥ ००८  ॥

महदादिविशेषान्तमसक्तप्रभवाव्ययम् ।
मनोजवनमश्रान्तं कालचक्रं प्रवर्तते  ॥ ००९  ॥

एतद्वंद्वसमायुक्तं कालचक्रमचेतनम् ।
विसृजेत्सङ्क्षिपेच्चापि बोधयेत्सामरं जगत्  ॥ ०१०  ॥

कालचक्रप्रवृत्तिं च निवृत्तिं चैव तत्त्वतः ।
यस्तु वेद नरो नित्यं न स भूतेषु मुह्यति  ॥ ०११  ॥

विमुक्तः सर्वसङ्क्लेशैः सर्वद्वंद्वातिगो मुनिः ।
विमुक्तः सर्वपापेभ्यः प्राप्नोति परमां गतिम्  ॥ ०१२  ॥

गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथ भिक्षुकः ।
चत्वार आश्रमाः प्रोक्ताः सर्वे गार्हस्थ्यमूलकाः  ॥ ०१३  ॥

यः कश्चिदिह लोके च ह्यागमः संप्रकीर्तितः ।
तस्यान्तगमनं श्रेयः कीर्तिरेषा सनातनी  ॥ ०१४  ॥

संस्कारैः संस्कृतः पूर्वं यथावच्चरितव्रतः ।
जातौ गुणविशिष्टायां समावर्तेत वेदवित्  ॥ ०१५  ॥

स्वदारनिरतो दान्तः शिष्टाचारो जितेन्द्रियः ।
पञ्चभिश्च महायज्ञैः श्रद्दधानो यजेत ह  ॥ ०१६  ॥

देवतातिथिशिष्टाशी निरतो वेदकर्मसु ।
इज्याप्रदानयुक्तश्च यथाशक्ति यथाविधि  ॥ ०१७  ॥

न पाणिपादचपलो न नेत्रचपलो मुनिः ।

न च वागङ्गचपल इति शिष्टस्य गोचरः ॥ ०१८ ॥

नित्ययज्ञोपवीती स्याच्छुक्लवासाः शुचिव्रतः ।
नियतो दमदानाभ्यां सदा शिष्टैश्च संविशेत् ॥ ०१९ ॥

जितशिश्नोदरो मैत्रः शिष्टाचारसमाहितः ।
वैणवीं धारयेद्यष्टिं सोदकं च कमण्डलुम् ॥ ०२० ॥

अधीत्याध्यापनं कुर्यात्तथा यजनयाजने ।
दानं प्रतिग्रहं चैव षड्गुणां वृत्तिमाचरेत् ॥ ०२१ ॥

त्रीणि कर्माणि यानीह ब्राह्मणानां तु जीविका ।
याजनाध्यापने चोभे शुद्धाच्चापि प्रतिग्रहः ॥ ०२२ ॥

अवशेषाणि चान्यानि त्रीणि कर्माणि यानि तु ।
दानमध्ययनं यज्ञो धर्मयुक्तानि तानि तु ॥ ०२३ ॥

तेष्वप्रमादं कुर्वीत त्रिषु कर्मसु धर्मवित् ।
दान्तो मैत्रः क्षमायुक्तः सर्वभूतसमो मुनिः ॥ ०२४ ॥

सर्वमेतद्यथाशक्ति विप्रो निर्वर्तयञ्शुचिः ।
एवं युक्तो जयेत्स्वर्गं गृहस्थः संशितव्रतः ॥ ०२५ ॥

---

# अध्याय ०४६

ब्रह्मोवाच ॥

एवमेतेन मार्गेण पूर्वोक्तेन यथाविधि ।
अधीतवान्यथाशक्ति तथैव ब्रह्मचर्यवान् ॥ ००१ ॥

स्वधर्मनिरतो विद्वान्सर्वेन्द्रिययतो मुनिः ।
गुरोः प्रियहिते युक्तः सत्यधर्मपरः शुचिः ॥ ००२ ॥

गुरुणा समनुज्ञातो भुञ्जीतान्नमकुत्सयन् ।
हविष्यभैक्ष्यभुक्चापि स्थानासनविहारवान् ॥ ००३ ॥

द्विकालमग्निं जुह्वानः शुचिर्भूत्वा समाहितः ।
धारयीत सदा दण्डं बैल्वं पालाशमेव वा ॥ ००४ ॥

क्षौमं कार्पासिकं वापि मृगाजिनमथापि वा ।
सर्वं काषायरक्तं स्याद्वासो वापि द्विजस्य ह ॥ ००५ ॥

मेखला च भवेन्मौञ्जी जटी नित्योदकस्तथा ।
यज्ञोपवीती स्वाध्यायी अलुप्तनियतव्रतः ॥ ००६ ॥

पूताभिश्च तथैवाद्भिः सदा दैवततर्पणम् ।
भावेन नियतः कुर्वन्ब्रह्मचारी प्रशस्यते ॥ ००७ ॥

एवं युक्तो जयेत्स्वर्गमूर्ध्वरेताः समाहितः ।
न संसरति जातीषु परमं स्थानमाश्रितः ॥ ००८ ॥

संस्कृतः सर्वसंस्कारैस्तथैव ब्रह्मचर्यवान् ।
ग्रामान्निष्क्रम्य चारण्यं मुनिः प्रव्रजितो वसेत् ॥ ००९ ॥

चर्मवल्कलसंवीतः स्वयं प्रातरुपस्पृशेत् ।
अरण्यगोचरो नित्यं न ग्रामं प्रविशेत्पुनः ॥ ०१० ॥

अर्चयन्नतिथीन्काले दद्याच्चापि प्रतिश्रयम् ।

फलपत्रावरैर्मूलैः श्यामाकेन च वर्तयन्  ॥ ०११  ॥

प्रवृत्तमुदकं वायुं सर्वं वानेयमा तृणात् ।
प्राश्नीयादानुपूर्व्येण यथादीक्षमतन्द्रितः  ॥ ०१२  ॥

आमूलफलभिक्षाभिरर्चेदतिथिमागतम् ।
यद्भक्षः स्यात्ततो दद्याद्भिक्षां नित्यमतन्द्रितः  ॥ ०१३  ॥

देवतातिथिपूर्वं च सदा भुञ्जीत वाग्यतः ।
अस्कन्दितमनाश्चैव लघ्वाशी देवताश्रयः  ॥ ०१४  ॥

दान्तो मैत्रः क्षमायुक्तः केशश्मश्रु च धारयन् ।
जुह्वन्स्वाध्यायशीलश्च सत्यधर्मपरायणः  ॥ ०१५  ॥

त्यक्तदेहः सदा दक्षो वननित्यः समाहितः ।
एवं युक्तो जयेत्स्वर्गं वानप्रस्थो जितेन्द्रियः  ॥ ०१६  ॥

गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथ वा पुनः ।
य इच्छेन्मोक्षमास्थातुमुत्तमां वृत्तिमाश्रयेत्  ॥ ०१७  ॥

अभयं सर्वभूतेभ्यो दत्त्वा नैष्कर्म्यमाचरेत् ।
सर्वभूतहितो मैत्रः सर्वेन्द्रिययतो मुनिः  ॥ ०१८  ॥

अयाचितमसङ्क्लृप्तमुपपन्नं यदृच्छया ।
जोषयेत सदा भोज्यं ग्रासमागतमस्पृहः  ॥ ०१९  ॥

यात्रामात्रं च भुञ्जीत केवलं प्राणयात्रिकम् ।
धर्मलब्धं तथाश्नीयान्न काममनुवर्तयेत्  ॥ ०२०  ॥

ग्रासादाच्छादनाच्चान्यन्न गृह्णीयात्कथञ्चन ।
यावदाहारयेत्तावत्प्रतिगृह्णीत नान्यथा  ॥ ०२१  ॥

परेभ्यो न प्रतिग्राह्यं न च देयं कदाचन ।
दैन्यभावाच्च भूतानां संविभज्य सदा बुधः ॥ ०२२ ॥

नाददीत परस्वानि न गृह्णीयादयाचितम् ।
न किञ्चिद्विषयं भुक्त्वा स्पृहयेत्तस्य वै पुनः ॥ ०२३ ॥

मृदमापस्तथाश्मानं पत्रपुष्पफलानि च ।
असंवृतानि गृह्णीयात्प्रवृत्तानीह कार्यवान् ॥ ०२४ ॥

न शिल्पजीविकां जीवेद्द्विरन्नं नोत कामयेत् ।
न द्वेष्टा नोपदेष्टा च भवेत निरुपस्कृतः ॥ ०२५ ॥

श्रद्धापूतानि भुञ्जीत निमित्तानि विवर्जयेत् ॥ ०२५ ॥

मुधावृत्तिरसक्तश्च सर्वभूतैरसंविदम् ।
कृत्वा वह्निं चरेद्भैक्ष्यं विधूमे भुक्तवज्जने ॥ ०२६ ॥

वृत्ते शरावसंपाते भैक्ष्यं लिप्सेत मोक्षवित् ।
लाभे न च प्रहृष्येत नालाभे विमना भवेत् ॥ ०२७ ॥

मात्राशी कालमाकाङ्क्षंश्चरेद्भैक्ष्यं समाहितः ।
लाभं साधारणं नेच्छेन्न भुञ्जीताभिपूजितः ॥ ०२८ ॥

अभिपूजितलाभाद्धि विजुगुप्सेत भिक्षुकः ॥ ०२८ ॥

शुक्तान्यम्लानि तिक्तानि कषायकटुकानि च ।
नास्वादयीत भुञ्जानो रसांश्च मधुरांस्तथा ॥ ०२९ ॥

यात्रामात्रं च भुञ्जीत केवलं प्राणयात्रिकम् ॥ ०२९ ॥

असंरोधेन भूतानां वृत्तिं लिप्सेत मोक्षवित् ।
न चान्यमनुभिक्षेत भिक्षमाणः कथञ्चन ॥ ०३० ॥

न संनिकाशयेद्धर्मं विविक्ते विरजाश्चरेत् ।
शून्यागारमरण्यं वा वृक्षमूलं नदीं तथा ॥ ०३१ ॥

प्रतिश्रयार्थं सेवेत पार्वतीं वा पुनर्गुहाम् ॥ ०३१ ॥

ग्रामैकरात्रिको ग्रीष्मे वर्षास्वेकत्र वा वसेत् ।
अध्वा सूर्येण निर्दिष्टः कीटवच्च चरेन्महीम् ॥ ०३२ ॥

दयार्थं चैव भूतानां समीक्ष्य पृथिवीं चरेत् ।
सञ्चयांश्च न कुर्वीत स्नेहवासं च वर्जयेत् ॥ ०३३ ॥

पूतेन चाम्भसा नित्यं कार्यं कुर्वीत मोक्षवित् ।
उपस्पृशेदुद्धृताभिरद्भिश्च पुरुषः सदा ॥ ०३४ ॥

अहिंसा ब्रह्मचर्यं च सत्यमार्जवमेव च ।
अक्रोधश्चानसूया च दमो नित्यमपैशुनम् ॥ ०३५ ॥

अष्टास्वेतेषु युक्तः स्याद्व्रतेषु नियतेन्द्रियः ।
अपापमशठं वृत्तमजिह्मं नित्यमाचरेत् ॥ ०३६ ॥

आशीर्युक्तानि कर्माणि हिंसायुक्तानि यानि च ।
लोकसङ्ग्रहधर्मं च नैव कुर्यान्न कारयेत् ॥ ०३७ ॥

सर्वभावानतिक्रम्य लघुमात्रः परिव्रजेत् ।
समः सर्वेषु भूतेषु स्थावरेषु चरेषु च ॥ ०३८ ॥

परं नोद्वेजयेत्कञ्चिन्न च कस्यचिदुद्विजेत् ।
विश्वास्यः सर्वभूतानामग्र्यो मोक्षविदुच्यते ॥ ०३९ ॥

अनागतं च न ध्यायेन्नातीतमनुचिन्तयेत् ।
वर्तमानमुपेक्षेत कालाकाङ्क्षी समाहितः ॥ ०४० ॥

न चक्षुषा न मनसा न वाचा दूषयेत्कचित् ।
न प्रत्यक्षं परोक्षं वा किञ्चिद्दुष्टं समाचरेत् ॥ ०४१ ॥

इन्द्रियाण्युपसंहृत्य कूर्मोऽङ्गानीव सर्वशः ।
क्षीणेन्द्रियमनोबुद्धिर्निरीक्षेत निरिन्द्रियः ॥ ०४२ ॥

निर्द्वंद्वो निर्नमस्कारो निःस्वाहाकार एव च ।
निर्ममो निरहङ्कारो निर्योगक्षेम एव च ॥ ०४३ ॥

निराशीः सर्वभूतेषु निरासङ्गो निराश्रयः ।
सर्वज्ञः सर्वतो मुक्तो मुच्यते नात्र संशयः ॥ ०४४ ॥

अपाणिपादपृष्ठं तमशिरस्कमनूदरम् ।
प्रहीणगुणकर्माणं केवलं विमलं स्थिरम् ॥ ०४५ ॥

अगन्धरसमस्पर्शमरूपाशब्दमेव च ।
अत्वगस्थ्यथ वामज्जममांसमपि चैव ह ॥ ०४६ ॥

निश्चिन्तमव्ययं नित्यं हृदिस्थमपि नित्यदा ।
सर्वभूतस्थमात्मानं ये पश्यन्ति न ते मृताः ॥ ०४७ ॥

न तत्र क्रमते बुद्धिर्नेन्द्रियाणि न देवताः ।
वेदा यज्ञाश्च लोकाश्च न तपो न पराक्रमः ॥ ०४८ ॥

यत्र ज्ञानवतां प्राप्तिरलिङ्गग्रहणा स्मृता ॥ ०४८ ॥

तस्मादलिङ्गो धर्मज्ञो धर्मव्रतमनुव्रतः ।

गूढधर्माश्रितो विद्वानज्ञातचरितं चरेत्  ॥ ०४९  ॥

अमूढो मूढरूपेण चरेद्धर्ममदूषयन् ।
यथैनमवमन्येरन्परे सततमेव हि  ॥ ०५०  ॥

तथावृत्तश्चरेद्धर्मं सतां वर्त्माविदूषयन् ।
यो ह्येवं वृत्तसंपन्नः स मुनिः श्रेष्ठ उच्यते  ॥ ०५१  ॥

इन्द्रियाणीन्द्रियार्थांश्च महाभूतानि पञ्च च ।
मनोबुद्धिरथात्मानमव्यक्तं पुरुषं तथा  ॥ ०५२  ॥

सर्वमेतत्प्रसंख्याय सम्यक्संत्यज्य निर्मलः ।
ततः स्वर्गमवाप्नोति विमुक्तः सर्वबन्धनैः  ॥ ०५३  ॥

एतदेवान्तवेलायां परिसंख्याय तत्त्ववित् ।
ध्यायेदेकान्तमास्थाय मुच्यतेऽथ निराश्रयः  ॥ ०५४  ॥

निर्मुक्तः सर्वसङ्गेभ्यो वायुराकाशगो यथा ।
क्षीणकोशो निरातङ्कः प्राप्नोति परमं पदम्  ॥ ०५५  ॥

---

# अध्याय ०४७

ब्रह्मोवाच  ॥

संन्यासं तप इत्याहुर्वृद्धा निश्चितदर्शिनः ।
ब्राह्मणा ब्रह्मयोनिस्था ज्ञानं ब्रह्म परं विदुः  ॥ ००१  ॥

अविदूरात्परं ब्रह्म वेदविद्याव्यपाश्रयम् ।

निर्द्वंद्वं निर्गुणं नित्यमचिन्त्यं गुह्यमुत्तमम्  ॥ ००२  ॥

ज्ञानेन तपसा चैव धीराः पश्यन्ति तत्पदम् ।
निर्णिक्ततमसः पूता व्युत्क्रान्तरजसोऽमलाः  ॥ ००३  ॥

तपसा क्षेममध्वानं गच्छन्ति परमैषिणः ।
संन्यासनिरता नित्यं ये ब्रह्मविदुषो जनाः  ॥ ००४  ॥

तपः प्रदीप इत्याहुराचारो धर्मसाधकः ।
ज्ञानं त्वेव परं विद्म संन्यासस्तप उत्तमम्  ॥ ००५  ॥

यस्तु वेद निराबाधं ज्ञानं तत्त्वविनिश्चयात् ।
सर्वभूतस्थमात्मानं स सर्वगतिरिष्यते  ॥ ००६  ॥

यो विद्वान्सहवासं च विवासं चैव पश्यति ।
तथैवैकत्वनानात्वे स दुःखात्परिमुच्यते  ॥ ००७  ॥

यो न कामयते किञ्चिन्न किञ्चिदवमन्यते ।
इहलोकस्थ एवैष ब्रह्मभूयाय कल्पते  ॥ ००८  ॥

प्रधानगुणतत्त्वज्ञः सर्वभूतविधानवित् ।
निर्ममो निरहङ्कारो मुच्यते नात्र संशयः  ॥ ००९  ॥

निर्द्वंद्वो निर्नमस्कारो निःस्वधाकार एव च ।
निर्गुणं नित्यमद्वंद्वं प्रशमेनैव गच्छति  ॥ ०१०  ॥

हित्वा गुणमयं सर्वं कर्म जन्तुः शुभाशुभम् ।
उभे सत्यानृते हित्वा मुच्यते नात्र संशयः  ॥ ०११  ॥

अव्यक्तबीजप्रभवो बुद्धिस्कन्धमयो महान् ।
महाहङ्कारविटप इन्द्रियान्तरकोटरः  ॥ ०१२  ॥

महाभूतविशाखश्च विशेषप्रतिशाखवान् ।
सदापर्णः सदापुष्पः शुभाशुभफलोदयः ॥ ०१३ ॥

आजीवः सर्वभूतानां ब्रह्मवृक्षः सनातनः ॥ ०१३ ॥

एतच्छित्त्वा च भित्त्वा च ज्ञानेन परमासिना ।
हित्वा चामरतां प्राप्य जह्याद्वै मृत्युजन्मनी ॥ ०१४ ॥

निर्ममो निरहङ्कारो मुच्यते नात्र संशयः ॥ ०१४ ॥

द्वावेतौ पक्षिणौ नित्यौ सखायौ चाप्यचेतनौ ।
एताभ्यां तु परो यस्य चेतनावानिति स्मृतः ॥ ०१५ ॥

अचेतनः सत्त्वसंघातयुक्तः ; सत्त्वात्परं चेतयतेऽन्तरात्मा ।
स क्षेत्रज्ञः सत्त्वसंघातबुद्धि ;र्गुणातिगो मुच्यते मृत्युपाशात् ॥ ०१६ ॥

---

# अध्याय ०४८

ब्रह्मोवाच ॥

केचिद्ब्रह्ममयं वृक्षं केचिद्ब्रह्ममयं महत् ।
केचित्पुरुषमव्यक्तं केचित्परमनामयम् ॥ ००१ ॥

मन्यन्ते सर्वमप्येतदव्यक्तप्रभवाव्ययम् ॥ ००१ ॥

उच्छ्वासमात्रमपि चेद्योऽन्तकाले समो भवेत् ।
आत्मानमुपसङ्गम्य सोऽमृतत्वाय कल्पते ॥ ००२ ॥

निमेषमात्रमपि चेत्संयम्यात्मानमात्मनि ।
गच्छत्यात्मप्रसादेन विदुषां प्राप्तिमव्ययाम्  ॥ ००३  ॥

प्राणायामैरथ प्राणान्संयम्य स पुनः पुनः ।
दशद्वादशभिर्वापि चतुर्विंशात्परं ततः  ॥ ००४  ॥

एवं पूर्वं प्रसन्नात्मा लभते यद्यदिच्छति ।
अव्यक्तात्सत्त्वमुद्रिक्तममृतत्वाय कल्पते  ॥ ००५  ॥

सत्त्वात्परतरं नान्यत्प्रशंसन्तीह तद्विदः ।
अनुमानाद्विजानीमः पुरुषं सत्त्वसंश्रयम्  ॥ ००६  ॥

न शक्यमन्यथा गन्तुं पुरुषं तमथो द्विजाः  ॥ ००६  ॥

क्षमा धृतिरहिंसा च समता सत्यमार्जवम् ।
ज्ञानं त्यागोऽथ संन्यासः सात्त्विकं वृत्तमिष्यते  ॥ ००७  ॥

एतेनैवानुमानेन मन्यन्तेऽथ मनीषिणः ।
सत्त्वं च पुरुषश्चैकस्तत्र नास्ति विचारणा  ॥ ००८  ॥

आहुरेके च विद्वांसो ये ज्ञाने सुप्रतिष्ठिताः ।
क्षेत्रज्ञसत्त्वयोरैक्यमित्येतन्नोपपद्यते  ॥ ००९  ॥

पृथग्भूतस्ततो नित्यमित्येतदविचारितम् ।
पृथग्भावश्च विज्ञेयः सहजश्चापि तत्त्वतः  ॥ ०१०  ॥

तथैवैकत्वनानात्वमिष्यते विदुषां नयः ।
मशकोदुम्बरे त्वैक्यं पृथक्त्वमपि दृश्यते  ॥ ०११  ॥

मत्स्यो यथान्यः स्यादप्सु संप्रयोगस्तथानयोः ।

संबन्धस्तोयबिन्दूनां पर्णे कोकनदस्य च ॥ ०१२ ॥

गुरुरुवाच ॥

इत्युक्तवन्तं ते विप्रास्तदा लोकपितामहम् ।
पुनः संशयमापन्नाः पप्रच्छुर्द्विजसत्तमाः ॥ ०१३ ॥

ऋषय ऊचुः ॥

किं स्विदेवेह धर्माणामनुष्ठेयतमं स्मृतम् ।
व्याहतामिव पश्यामो धर्मस्य विविधां गतिम् ॥ ०१४ ॥

ऊर्ध्वं देहाद्वदन्त्येके नैतदस्तीति चापरे ।
केचित्संशयितं सर्वं निःसंशयमथापरे ॥ ०१५ ॥

अनित्यं नित्यमित्येके नास्त्यस्तीत्यपि चापरे ।
एकरूपं द्विधेत्येके व्यामिश्रमिति चापरे ॥ ०१६ ॥

एकमेके पृथक्चान्ये बहुत्वमिति चापरे ॥ ०१६ ॥

मन्यन्ते ब्राह्मणा एवं प्राज्ञास्तत्त्वार्थदर्शिनः ।
जटाजिनधराश्चान्ये मुण्डाः केचिदसंवृताः ॥ ०१७ ॥

अस्नानं केचिदिच्छन्ति स्नानमित्यपि चापरे ।
आहारं केचिदिच्छन्ति केचिच्चानशने रताः ॥ ०१८ ॥

कर्म केचित्प्रशंसन्ति प्रशान्तिमपि चापरे ।
देशकालावुभौ केचिन्नैतदस्तीति चापरे ॥ ०१९ ॥

केचिन्मोक्षं प्रशंसन्ति केचिद्भोगान्पृथग्विधान् ॥ ०१९ ॥

धनानि केचिदिच्छन्ति निर्धनत्वं तथापरे ।
उपास्यसाधनं त्वेके नैतदस्तीति चापरे  ॥ ०२० ॥

अहिंसानिरताश्चान्ये केचिद्धिंसापरायणाः ।
पुण्येन यशसेत्येके नैतदस्तीति चापरे  ॥ ०२१ ॥

सद्भावनिरताश्चान्ये केचित्संशयिते स्थिताः ।
दुःखादन्ये सुखादन्ये ध्यानमित्यपरे स्थिताः  ॥ ०२२ ॥

यज्ञमित्यपरे धीराः प्रदानमिति चापरे ।
सर्वमेके प्रशंसन्ति न सर्वमिति चापरे  ॥ ०२३ ॥

तपस्त्वन्ये प्रशंसन्ति स्वाध्यायमपरे जनाः ।
ज्ञानं संन्यासमित्येके स्वभावं भूतचिन्तकाः  ॥ ०२४ ॥

एवं व्युत्थापिते धर्मे बहुधा विप्रधावति ।
निश्चयं नाधिगच्छामः संमूढाः सुरसत्तम  ॥ ०२५ ॥

इदं श्रेय इदं श्रेय इत्येवं प्रस्थितो जनः ।
यो हि यस्मिन्रतो धर्मे स तं पूजयते सदा  ॥ ०२६ ॥

तत्र नो विहता प्रज्ञा मनश्च बहुलीकृतम् ।
एतदाख्यातुमिच्छामः श्रेयः किमिति सत्तम  ॥ ०२७ ॥

अतः परं च यद्गुह्यं तद्भवान्वक्तुमर्हति ।
सत्त्वेक्षत्रज्ञयोश्चैव संबन्धः केन हेतुना  ॥ ०२८ ॥

एवमुक्तः स तैर्विप्रैर्भगवा.ण्ल्लोकभावनः ।
तेभ्यः शशंस धर्मात्मा याथातथ्येन बुद्धिमान्  ॥ ०२९ ॥

# अध्याय ०४९

ब्रह्मोवाच ॥

हन्त वः संप्रवक्ष्यामि यन्मां पृच्छथ सत्तमाः ।
समस्तमिह तच्छ्रुत्वा सम्यगेवावधार्यताम् ॥ ००१ ॥

अहिंसा सर्वभूतानामेतत्कृत्यतमं मतम् ।
एतत्पदमनुद्विग्नं वरिष्ठं धर्मलक्षणम् ॥ ००२ ॥

ज्ञानं निःश्रेय इत्याहुर्वृद्धा निश्चयदर्शिनः ।
तस्माज्ज्ञानेन शुद्धेन मुच्यते सर्वपातकैः ॥ ००३ ॥

हिंसापराश्च ये लोके ये च नास्तिकवृत्तयः ।
लोभमोहसमायुक्तास्ते वै निरयगामिनः ॥ ००४ ॥

आशीर्युक्तानि कर्माणि कुर्वते ये त्वतन्द्रिताः ।
तेऽस्मि.ण्ल्लोके प्रमोदन्ते जायमानाः पुनः पुनः ॥ ००५ ॥

कुर्वते ये तु कर्माणि श्रद्दधाना विपश्चितः ।
अनाशीर्योगसंयुक्तास्ते धीराः साधुदर्शिनः ॥ ००६ ॥

अतः परं प्रवक्ष्यामि सत्त्वेक्षत्रज्ञयोर्यथा ।
संयोगो विप्रयोगश्च तन्निबोधत सत्तमाः ॥ ००७ ॥

विषयो विषयित्वं च संबन्धोऽयमिहोच्यते ।
विषयी पुरुषो नित्यं सत्त्वं च विषयः स्मृतः ॥ ००८ ॥

व्याख्यातं पूर्वकल्पेन मशकोदुम्बरं यथा ।

भुज्यमानं न जानीते नित्यं सत्त्वमचेतनम् ॥ ००९ ॥

यस्त्वेव तु विजानीते यो भुङ्क्ते यश्च भुज्यते ॥ ००९ ॥

अनित्यं द्वंद्वसंयुक्तं सत्त्वमाहुर्गुणात्मकम् ।
निर्द्वंद्वो निष्कलो नित्यः क्षेत्रज्ञो निर्गुणात्मकः ॥ ०१० ॥

समः सञ्ज्ञागतस्त्वेवं यदा सर्वत्र दृश्यते ।
उपभुङ्क्ते सदा सत्त्वमापः पुष्करपर्णवत् ॥ ०११ ॥

सर्वैरपि गुणैर्विद्वान्व्यतिषक्तो न लिप्यते ।
जलबिन्दुर्यथा लोलः पद्मिनीपत्रसंस्थितः ॥ ०१२ ॥

एवमेवाप्यसंसक्तः पुरुषः स्यान्न संशयः ॥ ०१२ ॥

द्रव्यमात्रमभूत्सत्त्वं पुरुषस्येति निश्चयः ।
यथा द्रव्यं च कर्ता च संयोगोऽप्यनयोस्तथा ॥ ०१३ ॥

यथा प्रदीपमादाय कश्चित्तमसि गच्छति ।
तथा सत्त्वप्रदीपेन गच्छन्ति परमैषिणः ॥ ०१४ ॥

यावद्द्रव्यगुणस्तावत्प्रदीपः संप्रकाशते ।
क्षीणद्रव्यगुणं ज्योतिरन्तर्धानाय गच्छति ॥ ०१५ ॥

व्यक्तः सत्त्वगुणस्त्वेवं पुरुषोऽव्यक्त इष्यते ।
एतद्विप्रा विजानीत हन्त भूयो ब्रवीमि वः ॥ ०१६ ॥

सहस्रेणापि दुर्मेधा न वृद्धिमधिगच्छति ।
चतुर्थेनाप्यथांशेन बुद्धिमान्सुखमेधते ॥ ०१७ ॥

एवं धर्मस्य विज्ञेयं संसाधनमुपायतः ।

उपायज्ञो हि मेधावी सुखमत्यन्तमश्नुते ॥ ०१८ ॥

यथाध्वानमपाथेयः प्रपन्नो मानवः क्वचित् ।
क्लेशेन याति महता विनश्यत्यन्तरापि वा ॥ ०१९ ॥

तथा कर्मसु विज्ञेयं फलं भवति वा न वा ।
पुरुषस्यात्मनिःश्रेयः शुभाशुभनिदर्शनम् ॥ ०२० ॥

यथा च दीर्घमध्वानं पद्भ्यामेव प्रपद्यते ।
अदृष्टपूर्वं सहसा तत्त्वदर्शनवर्जितः ॥ ०२१ ॥

तमेव च यथाध्वानं रथेनेहाशुगामिना ।
यायादश्वप्रयुक्तेन तथा बुद्धिमतां गतिः ॥ ०२२ ॥

उच्चं पर्वतमारुह्य नान्ववेक्षेत भूगतम् ।
रथेन रथिनं पश्येत्क्लिश्यमानमचेतनम् ॥ ०२३ ॥

यावद्रथपथस्तावद्रथेन स तु गच्छति ।
क्षीणे रथपथे प्राज्ञो रथमुत्सृज्य गच्छति ॥ ०२४ ॥

एवं गच्छति मेधावी तत्त्वयोगविधानवित् ।
समाज्ञाय महाबुद्धिरुत्तरादुत्तरोत्तरम् ॥ ०२५ ॥

यथा महार्णवं घोरमप्लवः संप्रगाहते ।
बाहुभ्यामेव संमोहाद्वधं चर्च्छत्यसंशयम् ॥ ०२६ ॥

नावा चापि यथा प्राज्ञो विभागज्ञस्तरित्रया ।
अक्लान्तः सलिलं गाहेत्क्षिप्रं संतरति ध्रुवम् ॥ ०२७ ॥

तीर्णो गच्छेत्परं पारं नावमुत्सृज्य निर्ममः ।
व्याख्यातं पूर्वकल्पेन यथा रथिपदातिनौ ॥ ०२८ ॥

स्नेहात्संमोहमापन्नो नावि दाशो यथा तथा ।
ममत्वेनाभिभूतः स तत्रैव परिवर्तते ॥ ०२९ ॥

नावं न शक्यमारुह्य स्थले विपरिवर्तितुम् ।
तथैव रथमारुह्य नाप्सु चर्या विधीयते ॥ ०३० ॥

एवं कर्म कृतं चित्रं विषयस्थं पृथक्पृथक् ।
यथा कर्म कृतं लोके तथा तदुपपद्यते ॥ ०३१ ॥

यन्नैव गन्धिनो रस्यं न रूपस्पर्शशब्दवत् ।
मन्यन्ते मुनयो बुद्ध्या तत्प्रधानं प्रचक्षते ॥ ०३२ ॥

तत्र प्रधानमव्यक्तमव्यक्तस्य गुणो महान् ।
महतः प्रधानभूतस्य गुणोऽहङ्कार एव च ॥ ०३३ ॥

अहङ्कारप्रधानस्य महाभूतकृतो गुणः ।
पृथक्त्वेन हि भूतानां विषया वै गुणाः स्मृताः ॥ ०३४ ॥

बीजधर्मं यथाव्यक्तं तथैव प्रसवात्मकम् ।
बीजधर्मा महानात्मा प्रसवश्चेति नः श्रुतम् ॥ ०३५ ॥

बीजधर्मा त्वहङ्कारः प्रसवश्च पुनः पुनः ।
बीजप्रसवधर्माणि महाभूतानि पञ्च वै ॥ ०३६ ॥

बीजधर्मिण इत्याहुः प्रसवं च न कुर्वते ।
विशेषाः पञ्चभूतानां तेषां वित्तं विशेषणम् ॥ ०३७ ॥

तत्रैकगुणमाकाशं द्विगुणो वायुरुच्यते ।
त्रिगुणं ज्योतिरित्याहुरापश्चापि चतुर्गुणाः ॥ ०३८ ॥

पृथ्वी पञ्चगुणा ज्ञेया त्रसस्थावरसङ्कुला ।
सर्वभूतकरी देवी शुभाशुभनिदर्शना ॥ ०३९ ॥

शब्दः स्पर्शस्तथा रूपं रसो गन्धश्च पञ्चमः ।
एते पञ्च गुणा भूमेर्विज्ञेया द्विजसत्तमाः ॥ ०४० ॥

पार्थिवश्च सदा गन्धो गन्धश्च बहुधा स्मृतः ।
तस्य गन्धस्य वक्ष्यामि विस्तरेण बहून्गुणान् ॥ ०४१ ॥

इष्टश्चानिष्टगन्धश्च मधुरोऽम्लः कटुस्तथा ।
निर्हारी संहतः स्निग्धो रूक्षो विशद एव च ॥ ०४२ ॥

एवं दशविधो ज्ञेयः पार्थिवो गन्ध इत्युत ॥ ०४२ ॥

शब्दः स्पर्शस्तथा रूपं रसश्चापां गुणाः स्मृताः ।
रसज्ञानं तु वक्ष्यामि रसस्तु बहुधा स्मृतः ॥ ०४३ ॥

मधुरोऽम्लः कटुस्तिक्तः कषायो लवणस्तथा ।
एवं षड्विधविस्तारो रसो वारिमयः स्मृतः ॥ ०४४ ॥

शब्दः स्पर्शस्तथा रूपं त्रिगुणं ज्योतिरुच्यते ।
ज्योतिषश्च गुणो रूपं रूपं च बहुधा स्मृतम् ॥ ०४५ ॥

शुक्लं कृष्णं तथा रक्तं नीलं पीतारुणं तथा ।
ह्रस्वं दीर्घं तथा स्थूलं चतुरस्राणु वृत्तकम् ॥ ०४६ ॥

एवं द्वादशविस्तारं तेजसो रूपमुच्यते ।
विज्ञेयं ब्राह्मणैर्नित्यं धर्मज्ञैः सत्यवादिभिः ॥ ०४७ ॥

शब्दस्पर्शौ च विज्ञेयौ द्विगुणो वायुरुच्यते ।
वायोश्चापि गुणः स्पर्शः स्पर्शश्च बहुधा स्मृतः ॥ ०४८ ॥

उष्णः शीतः सुखो दुःखः स्निग्धो विशद एव च ।
कठिनश्चिक्कणः श्लक्ष्णः पिच्छिलो दारुणो मृदुः ॥ ०४९ ॥

एवं द्वादशविस्तारो वायव्यो गुण उच्यते ।
विधिवद्ब्रह्मणैः सिद्धैर्धर्मज्ञैस्तत्त्वदर्शिभिः ॥ ०५० ॥

तत्रैकगुणमाकाशं शब्द इत्येव च स्मृतः ।
तस्य शब्दस्य वक्ष्यामि विस्तरेण बहून्गुणान् ॥ ०५१ ॥

षड्जर्षभौ च गान्धारो मध्यमः पञ्चमस्तथा ।
अतः परं तु विज्ञेयो निषादो धैवतस्तथा ॥ ०५२ ॥

इष्टोऽनिष्टश्च शब्दस्तु संहतः प्रविभागवान् ।
एवं बहुविधो ज्ञेयः शब्द आकाशसंभवः ॥ ०५३ ॥

आकाशमुत्तमं भूतमहङ्कारस्ततः परम् ।
अहङ्कारात्परा बुद्धिर्बुद्धेरात्मा ततः परः ॥ ०५४ ॥

तस्मात्तु परमव्यक्तमव्यक्तात्पुरुषः परः ।
परावरज्ञो भूतानां यं प्राप्यानन्त्यमश्नुते ॥ ०५५ ॥

---

# अध्याय ०५०

ब्रह्मोवाच ॥

भूतानामथ पञ्चानां यथैषामीश्वरं मनः ।
नियमे च विसर्गे च भूतात्मा मन एव च ॥ ००१ ॥

अधिष्ठाता मनो नित्यं भूतानां महतां तथा ।
बुद्धिरैश्वर्यमाचष्टे क्षेत्रज्ञः सर्व उच्यते ॥ ००२ ॥

इन्द्रियाणि मनो युङ्क्ते सदश्वानिव सारथिः ।
इन्द्रियाणि मनो बुद्धिं क्षेत्रज्ञो युञ्जते सदा ॥ ००३ ॥

महाभूतसमायुक्तं बुद्धिसंयमनं रथम् ।
तमारुह्य स भूतात्मा समन्तात्परिधावति ॥ ००४ ॥

इन्द्रियग्रामसंयुक्तो मनःसारथिरेव च ।
बुद्धिसंयमनो नित्यं महान्ब्रह्ममयो रथः ॥ ००५ ॥

एवं यो वेत्ति विद्वान्वै सदा ब्रह्ममयं रथम् ।
स धीरः सर्वलोकेषु न मोहमधिगच्छति ॥ ००६ ॥

अव्यक्तादि विशेषान्तं त्रसस्थावरसङ्कुलम् ।
चन्द्रसूर्यप्रभालोकं ग्रहनक्षत्रमण्डितम् ॥ ००७ ॥

नदीपर्वतजालैश्च सर्वतः परिभूषितम् ।
विविधाभिस्तथाद्भिश्च सततं समलङ्कृतम् ॥ ००८ ॥

आजीवः सर्वभूतानां सर्वप्राणभृतां गतिः ।
एतद्ब्रह्मवनं नित्यं यस्मिंश्चरति क्षेत्रवित् ॥ ००९ ॥

लोकेऽस्मिन्यानि भूतानि स्थावराणि चराणि च ।
तान्येवाग्रे प्रलीयन्ते पश्चाद्भूतकृता गुणाः ॥ ०१० ॥

गुणेभ्यः पञ्चभूतानि एष भूतसमुच्छ्रयः ॥ ०१० ॥

देवा मनुष्या गन्धर्वाः पिशाचासुरराक्षसाः ।

सर्वे स्वभावतः सृष्टा न क्रियाभ्यो न कारणात्  ॥ ०११  ॥

एते विश्वकृतो विप्रा जायन्ते ह पुनः पुनः ।
तेभ्यः प्रसूतास्तेष्वेव महाभूतेषु पञ्चसु  ॥ ०१२  ॥

प्रलीयन्ते यथाकालमूर्मयः सागरे यथा  ॥ ०१२  ॥

विश्वसृग्भ्यस्तु भूतेभ्यो महाभूतानि गच्छति ।
भूतेभ्यश्चापि पञ्चभ्यो मुक्तो गच्छेत्प्रजापतिम्  ॥ ०१३  ॥

प्रजापतिरिदं सर्वं तपसैवासृजत्प्रभुः ।
तथैव वेदानृषयस्तपसा प्रतिपेदिरे  ॥ ०१४  ॥

तपसश्चानुपूर्व्येण फलमूलाशिनस्तथा ।
त्रैलोक्यं तपसा सिद्धाः पश्यन्तीह समाहिताः  ॥ ०१५  ॥

ओषधान्यगदादीनी नानाविद्याश्च सर्वशः ।
तपसैव प्रसिध्यन्ति तपोमूलं हि साधनम्  ॥ ०१६  ॥

यद्दुरापं दुराम्नायं दुराधर्षं दुरन्वयम् ।
तत्सर्वं तपसा साध्यं तपो हि दुरतिक्रमम्  ॥ ०१७  ॥

सुरापो ब्रह्महा स्तेयी भ्रूणहा गुरुतल्पगः ।
तपसैव सुतप्तेन मुच्यन्ते किल्बिषात्ततः  ॥ ०१८  ॥

मनुष्याः पितरो देवाः पशवो मृगपक्षिणः ।
यानि चान्यानि भूतानि त्रसानि स्थावराणि च  ॥ ०१९  ॥

तपःपरायणा नित्यं सिध्यन्ते तपसा सदा ।
तथैव तपसा देवा महाभागा दिवं गताः  ॥ ०२०  ॥

आशीर्युक्तानि कर्माणि कुर्वते ये त्वतन्द्रिताः ।
अहङ्कारसमायुक्तास्ते सकाशे प्रजापतेः ॥ ०२१ ॥

ध्यानयोगेन शुद्धेन निर्ममा निरहङ्कृताः ।
प्राप्नुवन्ति महात्मानो महान्तं लोकमुत्तमम् ॥ ०२२ ॥

ध्यानयोगादुपागम्य प्रसन्नमतयः सदा ।
सुखोपचयमव्यक्तं प्रविशन्त्यात्मवत्तया ॥ ०२३ ॥

ध्यानयोगादुपागम्य निर्ममा निरहङ्कृताः ।
अव्यक्तं प्रविशन्तीह महान्तं लोकमुत्तमम् ॥ ०२४ ॥

अव्यक्तादेव संभूतः समयज्ञो गतः पुनः ।
तमोरजोभ्यां निर्मुक्तः सत्त्वमास्थाय केवलम् ॥ ०२५ ॥

विमुक्तः सर्वपापेभ्यः सर्वं त्यजति निष्कलः ।
क्षेत्रज्ञ इति तं विद्याद्यस्तं वेद स वेदवित् ॥ ०२६ ॥

चित्तं चित्तादुपागम्य मुनिरासीत संयतः ।
यच्चित्तस्तन्मना भूत्वा गुह्यमेतत्सनातनम् ॥ ०२७ ॥

अव्यक्तादि विशेषान्तमविद्यालक्षणं स्मृतम् ।
निबोधत यथा हीदं गुणैर्लक्षणमित्युत ॥ ०२८ ॥

द्व्यक्षरस्तु भवेन्मृत्युस्त्र्यक्षरं ब्रह्म शाश्वतम् ।
ममेति च भवेन्मृत्युर्न ममेति च शाश्वतम् ॥ ०२९ ॥

कर्म केचित्प्रशंसन्ति मन्दबुद्धितरा नराः ।
ये तु बुद्धा महात्मानो न प्रशंसन्ति कर्म ते ॥ ०३० ॥

कर्मणा जायते जन्तुर्मूर्तिमान्षोडशात्मकः ।

पुरुषं सृजतेऽविद्या अग्राह्यममृताशिनम्  ॥ ०३१  ॥

तस्मात्कर्मसु निःस्नेहा ये केचित्पारदर्शिनः ।
विद्यामयोऽयं पुरुषो न तु कर्ममयः स्मृतः  ॥ ०३२  ॥

अपूर्वममृतं नित्यं य एनमविचारिणम् ।
य एनं विन्दतेऽऽत्मानमग्राह्यममृताशिनम्  ॥ ०३३  ॥

अग्राह्योऽमृतो भवति य एभिः कारणैर्ध्रुवः  ॥ ०३३  ॥

अपोह्य सर्वसङ्कल्पान्संयम्यात्मानमात्मनि ।
स तद्ब्रह्म शुभं वेत्ति यस्माद्भूयो न विद्यते  ॥ ०३४  ॥

प्रसादेनैव सत्त्वस्य प्रसादं समवाप्नुयात् ।
लक्षणं हि प्रसादस्य यथा स्यात्स्वप्नदर्शनम्  ॥ ०३५  ॥

गतिरेषा तु मुक्तानां ये ज्ञानपरिनिष्ठिताः ।
प्रवृत्तयश्च याः सर्वाः पश्यन्ति परिणामजाः  ॥ ०३६  ॥

एषा गतिरसक्तानामेष धर्मः सनातनः ।
एषा ज्ञानवतां प्राप्तिरेतद्वृत्तमनिन्दितम्  ॥ ०३७  ॥

समेन सर्वभूतेषु निःस्पृहेण निराशिषा ।
शक्या गतिरियं गन्तुं सर्वत्र समदर्शिना  ॥ ०३८  ॥

एतद्वः सर्वमाख्यातं मया विप्रर्षिसत्तमाः ।
एवमाचरत क्षिप्रं ततः सिद्धिमवाप्स्यथ  ॥ ०३९  ॥

गुरुरुवाच  ॥

इत्युक्तास्ते तु मुनयो ब्रह्मणा गुरुणा तथा ।

कृतवन्तो महात्मानस्ततो लोकानवाप्नुवन्  ॥ ०४०  ॥

त्वमप्येतन्महाभाग यथोक्तं ब्रह्मणो वचः ।
सम्यगाचर शुद्धात्मंस्ततः सिद्धिमवाप्स्यसि  ॥ ०४१  ॥

वासुदेव उवाच  ॥

इत्युक्तः स तदा शिष्यो गुरुणा धर्ममुत्तमम् ।
चकार सर्वं कौन्तेय ततो मोक्षमवाप्तवान्  ॥ ०४२  ॥

कृतकृत्यश्च स तदा शिष्यः कुरुकुलोद्वह ।
तत्पदं समनुप्राप्तो यत्र गत्वा न शोचति  ॥ ०४३  ॥

अर्जुन उवाच  ॥

को न्वसौ ब्राह्मणः कृष्ण कश्च शिष्यो जनार्दन ।
श्रोतव्यं चेन्मयैतद्वै तत्त्वमाचक्ष्व मे विभो  ॥ ०४४  ॥

वासुदेव उवाच  ॥

अहं गुरुर्महाबाहो मनः शिष्यं च विद्धि मे ।
त्वत्प्रीत्या गुह्यमेतच्च कथितं मे धनञ्जय  ॥ ०४५  ॥

मयि चेदस्ति ते प्रीतिर्नित्यं कुरुकुलोद्वह ।
अध्यात्ममेतच्छ्रुत्वा त्वं सम्यगाचर सुव्रत  ॥ ०४६  ॥

ततस्त्वं सम्यगाचीर्णे धर्मेऽस्मिन्कुरुनन्दन ।
सर्वपापविशुद्धात्मा मोक्षं प्राप्स्यसि केवलम्  ॥ ०४७  ॥

पूर्वमप्येतदेवोक्तं युद्धकाल उपस्थिते ।
मया तव महाबाहो तस्मादत्र मनः कुरु  ॥ ०४८  ॥

मया तु भरतश्रेष्ठ चिरदृष्टः पिता विभो ।
तमहं द्रष्टुमिच्छामि संमते तव फल्गुन ॥ ०४९ ॥

वैशंपायन उवाच ॥

इत्युक्तवचनं कृष्णं प्रत्युवाच धनञ्जयः ।
गच्छावो नगरं कृष्ण गजसाह्वयमद्य वै ॥ ०५० ॥

समेत्य तत्र राजानं धर्मात्मानं युधिष्ठिरम् ।
समनुज्ञाप्य दुर्धर्ष स्वां पुरीं यातुमर्हसि ॥ ०५१ ॥

---

# कृष्णद्वारकाप्रस्थानाम्

## अध्याय ०५१

वैशंपायन उवाच ॥

ततोऽभ्यचोदयत्कृष्णो युज्यतामिति दारुकम् ।
मुहूर्तादिव चाचष्ट युक्तमित्येव दारुकः ॥ ००१ ॥

तथैव चानुयात्राणि चोदयामास पाण्डवः ।
सज्जयध्वं प्रयास्यामो नगरं गजसाह्वयम् ॥ ००२ ॥

इत्युक्ताः सैनिकास्ते तु सज्जीभूता विशां पते ।
आचख्युः सज्जमित्येव पार्थायामिततेजसे ॥ ००३ ॥

ततस्तौ रथमास्थाय प्रयातौ कृष्णपाण्डवौ ।
विकुर्वाणौ कथाश्चित्राः प्रीयमाणौ विशां पते ॥ ००४ ॥

रथस्थं तु महातेजा वासुदेवं धनञ्जयः ।
पुनरेवाब्रवीद्वाक्यमिदं भरतसत्तम ॥ ००५ ॥

त्वत्प्रसादाज्जयः प्राप्तो राज्ञा वृष्णिकुलोद्वह ।
निहताः शत्रवश्चापि प्राप्तं राज्यमकण्टकम् ॥ ००६ ॥

नाथवन्तश्च भवता पाण्डवा मधुसूदन ।
भवन्तं प्लवमासाद्य तीर्णाः स्म कुरुसागरम् ॥ ००७ ॥

विश्वकर्मन्नमस्तेऽस्तु विश्वात्मन्विश्वसंभव ।
यथाहं त्वा विजानामि यथा चाहं भवन्मनाः ॥ ००८ ॥

त्वत्तेजःसंभवो नित्यं हुताशो मधुसूदन ।
रतिः क्रीडामयी तुभ्यं माया ते रोदसी विभो ॥ ००९ ॥

त्वयि सर्वमिदं विश्वं यदिदं स्थाणुजङ्गमम् ।
त्वं हि सर्वं विकुरुषे भूतग्रामं सनातनम् ॥ ०१० ॥

पृथिवीं चान्तरिक्षं च तथा स्थावरजङ्गमम् ।
हसितं तेऽमला ज्योत्स्ना ऋतवश्चेन्द्रियान्वयाः ॥ ०११ ॥

प्राणो वायुः सततगः क्रोधो मृत्युः सनातनः ।
प्रसादे चापि पद्मा श्रीर्नित्यं त्वयि महामते ॥ ०१२ ॥

रतिस्तुष्टिर्धृतिः क्षान्तिस्त्वयि चेदं चराचरम् ।
त्वमेवेह युगान्तेषु निधनं प्रोच्यसेऽनघ ॥ ०१३ ॥

सुदीर्घेणापि कालेन न ते शक्या गुणा मया ।

आत्मा च परमो वक्तुं नमस्ते नलिनेक्षण ॥ ०१४ ॥

विदितो मेऽसि दुर्धर्ष नारदाद्देवलात्तथा ।
कृष्णद्वैपायनाच्चैव तथा कुरुपितामहात् ॥ ०१५ ॥

त्वयि सर्वं समासक्तं त्वमेवैको जनेश्वरः ।
यच्चानुग्रहसंयुक्तमेतदुक्तं त्वयानघ ॥ ०१६ ॥

एतत्सर्वमहं सम्यगाचरिष्ये जनार्दन ।
इदं चाद्भुतमत्यर्थं कृतमस्मत्प्रियेप्सया ॥ ०१७ ॥

यत्पापो निहतः संख्ये कौरव्यो धृतराष्ट्रजः ।
त्वया दग्धं हि तत्सैन्यं मया विजितमाहवे ॥ ०१८ ॥

भवता तत्कृतं कर्म येनावाप्तो जयो मया ।
दुर्योधनस्य सङ्ग्रामे तव बुद्धिपराक्रमैः ॥ ०१९ ॥

कर्णस्य च वधोपायो यथावत्संप्रदर्शितः ।
सैन्धवस्य च पापस्य भूरिश्रवस एव च ॥ ०२० ॥

अहं च प्रीयमाणेन त्वया देवकिनन्दन ।
यदुक्तस्तत्करिष्यामि न हि मेऽत्र विचारणा ॥ ०२१ ॥

राजानं च समासाद्य धर्मात्मानं युधिष्ठिरम् ।
चोदयिष्यामि धर्मज्ञ गमनार्थं तवानघ ॥ ०२२ ॥

रुचितं हि ममैतत्ते द्वारकागमनं प्रभो ।
अचिराच्चैव दृष्टा त्वं मातुलं मधुसूदन ॥ ०२३ ॥

बलदेवं च दुर्धर्षं तथान्यान्वृष्णिपुङ्गवान् ॥ ०२३ ॥

एवं संभाषमाणौ तौ प्राप्तौ वारणसाह्वयम् ।
तथा विविशतुश्चोभौ संप्रहृष्टनराकुलम्  ॥ ०२४  ॥

तौ गत्वा धृतराष्ट्रस्य गृहं शक्रगृहोपमम् ।
ददृशाते महाराज धृतराष्ट्रं जनेश्वरम्  ॥ ०२५  ॥

विदुरं च महाबुद्धिं राजानं च युधिष्ठिरम् ।
भीमसेनं च दुर्धर्षं माद्रीपुत्रौ च पाण्डवौ  ॥ ०२६  ॥

धृतराष्ट्रमुपासीनं युयुत्सुं चापराजितम्  ॥ ०२६  ॥

गान्धारीं च महाप्राज्ञां पृथां कृष्णां च भामिनीम् ।
सुभद्राद्याश्च ताः सर्वा भरतानां स्त्रियस्तथा  ॥ ०२७  ॥

ददृशाते स्थिताः सर्वा गान्धारीं परिवार्य वै  ॥ ०२७  ॥

ततः समेत्य राजानं धृतराष्ट्रमरिंदमौ ।
निवेद्य नामधेये स्वे तस्य पादावगृह्णताम्  ॥ ०२८  ॥

गान्धार्याश्च पृथायाश्च धर्मराज्ञस्तथैव च ।
भीमस्य च महात्मानौ तथा पादावगृह्णताम्  ॥ ०२९  ॥

क्षत्तारं चापि संपूज्य पृष्ट्वा कुशलमव्ययम् ।
तैः सार्धं नृपतिं वृद्धं ततस्तं पर्युपासताम्  ॥ ०३०  ॥

ततो निशि महाराज धृतराष्ट्रः कुरूद्वहान् ।
जनार्दनं च मेधावी व्यसर्जयत वै गृहान्  ॥ ०३१  ॥

तेऽनुज्ञाता नृपतिना ययुः स्वं स्वं निवेशनम् ।
धनञ्जयगृहानेव ययौ कृष्णस्तु वीर्यवान्  ॥ ०३२  ॥

तत्रार्चितो यथान्यायं सर्वकामैरुपस्थितः ।
कृष्णः सुष्वाप मेधावी धनञ्जयसहायवान् ॥ ०३३ ॥

प्रभातायां तु शर्वर्यां कृतपूर्वाह्णिकक्रियौ ।
धर्मराजस्य भवनं जग्मतुः परमार्चितौ ॥ ०३४ ॥

यत्रास्ते स सहामात्यो धर्मराजो महामनाः ॥ ०३४ ॥

ततस्तौ तत्प्रविश्याथ ददृशाते महाबलौ ।
धर्मराजानमासीनं देवराजमिवाश्विनौ ॥ ०३५ ॥

तौ समासाद्य राजानं वार्ष्णेयकुरुपुङ्गवौ ।
निषीदतुरनुज्ञातौ प्रीयमाणेन तेन वै ॥ ०३६ ॥

ततः स राजा मेधावी विवक्षू प्रेक्ष्य तावुभौ ।
प्रोवाच वदतां श्रेष्ठो वचनं राजसत्तमः ॥ ०३७ ॥

विवक्षू हि युवां मन्ये वीरौ यदुकुरूद्वहौ ।
ब्रूत कर्तास्मि सर्वं वां न चिरान्मा विचार्यताम् ॥ ०३८ ॥

इत्युक्ते फल्गुनस्तत्र धर्मराजानमब्रवीत् ।
विनीतवदुपागम्य वाक्यं वाक्यविशारदः ॥ ०३९ ॥

अयं चिरोषितो राजन्वासुदेवः प्रतापवान् ।
भवन्तं समनुज्ञाप्य पितरं द्रष्टुमिच्छति ॥ ०४० ॥

स गच्छेदभ्यनुज्ञातो भवता यदि मन्यसे ।
आनर्तनगरीं वीरस्तदनुज्ञातुमर्हसि ॥ ०४१ ॥

युधिष्ठिर उवाच ॥

पुण्डरीकाक्ष भद्रं ते गच्छ त्वं मधुसूदन ।
पुरीं द्वारवतीमद्य द्रष्टुं शूरसुतं प्रभुम् ॥ ०४२ ॥

रोचते मे महाबाहो गमनं तव केशव ।
मातुलश्चिरदृष्टो मे त्वया देवी च देवकी ॥ ०४३ ॥

मातुलं वसुदेवं त्वं बलदेवं च माधव ।
पूजयेथा महाप्राज्ञ मद्वाक्येन यथार्हतः ॥ ०४४ ॥

स्मरेथाश्चापि मां नित्यं भीमं च बलिनां वरम् ।
फल्गुनं नकुलं चैव सहदेवं च माधव ॥ ०४५ ॥

आनर्तानवलोक्य त्वं पितरं च महाभुज ।
वृष्णींश्च पुनरागच्छेर्हयमेधे ममानघ ॥ ०४६ ॥

स गच्छ रत्नान्यादाय विविधानि वसूनि च ।
यच्चाप्यन्यन्मनोज्ञं ते तदप्यादत्स्व सात्वत ॥ ०४७ ॥

इयं हि वसुधा सर्वा प्रसादात्तव माधव ।
अस्मानुपगता वीर निहताश्चापि शत्रवः ॥ ०४८ ॥

एवं ब्रुवति कौरव्ये धर्मराजे युधिष्ठिरे ।
वासुदेवो वरः पुंसामिदं वचनमब्रवीत् ॥ ०४९ ॥

तवैव रत्नानि धनं च केवल ;म्धरा च कृत्स्ना तु महाभुजाद्य वै ।
यदस्ति चान्यद्द्रविणं गृहेषु मे ; त्वमेव तस्येश्वर नित्यमीश्वरः ॥ ०५० ॥

तथेत्यथोक्तः प्रतिपूजितस्तदा ; गदाग्रजो धर्मसुतेन वीर्यवान् ।
पितृष्वसामभ्यवदद्यथाविधि ; संपूजितश्चाप्यगमत्प्रदक्षिणम् ॥ ०५१ ॥

तया स सम्यक्प्रतिनन्दितस्तदा ; तथैव सर्वैर्विदुरादिभिस्ततः ।

विनिर्ययौ नागपुराद्गदाग्रजो ; रथेन दिव्येन चतुर्युजा हरिः ॥ ०५२ ॥

रथं सुभद्रामधिरोप्य भामिनीं ; युधिष्ठिरस्यानुमते जनार्दनः ।
पितृष्वसायाश्च तथा महाभुजो ; विनिर्ययौ पौरजनाभिसंवृतः ॥ ०५३ ॥

तमन्वगाद्वानरवर्यकेतनः ; ससात्यकिर्माद्रवतीसुतावपि ।
अगाधबुद्धिर्विदुरश्च माधवं ; स्वयं च भीमो गजराजविक्रमः ॥ ०५४ ॥

निवर्तयित्वा कुरुराष्ट्रवर्धनां ;स्ततः स सर्वान्विदुरं च वीर्यवान् ।
जनार्दनो दारुकमाह सत्वरः ; प्रचोदयाश्वानिति सात्यकिस्तदा ॥ ०५५ ॥

ततो ययौ शत्रुगणप्रमर्दनः ; शिनिप्रवीरानुगतो जनार्दनः ।
यथा निहत्यारिगणाञ्शतक्रतु ;र्दिवं तथानर्तपुरीं प्रतापवान् ॥ ०५६ ॥

---

# उत्त ण्कोपाख्यानम्

# अध्याय ०५२

वैशंपायन उवाच ॥

तथा प्रयान्तं वार्ष्णेयं द्वारकां भरतर्षभाः ।
परिष्वज्य न्यवर्तन्त सानुयात्राः परंतपाः ॥ ००१ ॥

पुनः पुनश्च वार्ष्णेयं पर्यष्वजत फल्गुनः ।
आ चक्षुर्विषयाच्चैनं ददर्श च पुनः पुनः ॥ ००२ ॥

कृच्छ्रेणैव च तां पार्थो गोविन्दे विनिवेशिताम् ।

सञ्जहार तदा दृष्टिं कृष्णश्चाप्यपराजितः ॥ ००३ ॥

तस्य प्रयाणे यान्यासन्निमित्तानि महात्मनः ।
बह्णन्यद्भुतरूपाणि तानि मे गदतः शृणु ॥ ००४ ॥

वायुर्वेगेन महता रथस्य पुरतो ववौ ।
कुर्वन्निःशर्करं मार्गं विरजस्कमकण्टकम् ॥ ००५ ॥

ववर्ष वासवश्चापि तोयं शुचि सुगन्धि च ।
दिव्यानि चैव पुष्पाणि पुरतः शार्ङ्गधन्वनः ॥ ००६ ॥

स प्रयातो महाबाहुः समेषु मरुधन्वसु ।
ददर्शाथ मुनिश्रेष्ठमुत्तङ्कममितौजसम् ॥ ००७ ॥

स तं संपूज्य तेजस्वी मुनिं पृथुललोचनः ।
पूजितस्तेन च तदा पर्यपृच्छदनामयम् ॥ ००८ ॥

स पृष्टः कुशलं तेन संपूज्य मधुसूदनम् ।
उत्तङ्को ब्राह्मणश्रेष्ठस्ततः पप्रच्छ माधवम् ॥ ००९ ॥

कच्चिच्छौरे त्वया गत्वा कुरुपाण्डवसद्म तत् ।
कृतं सौभ्रात्रमचलं तन्मे व्याख्यातुमर्हसि ॥ ०१० ॥

अभिसंधाय तान्वीरानुपावृत्तोऽसि केशव ।
संबन्धिनः सुदयितान्सततं वृष्णिपुङ्गव ॥ ०११ ॥

कच्चित्पाण्डुसुताः पञ्च धृतराष्ट्रस्य चात्मजाः ।
लोकेषु विहरिष्यन्ति त्वया सह परंतप ॥ ०१२ ॥

स्वराष्ट्रेषु च राजानः कच्चित्प्राप्स्यन्ति वै सुखम् ।
कौरवेषु प्रशान्तेषु त्वया नाथेन माधव ॥ ०१३ ॥

या मे संभावना तात त्वयि नित्यमवर्तत ।
अपि सा सफला कृष्ण कृता ते भरतान्प्रति ॥ ०१४ ॥

वासुदेव उवाच ॥

कृतो यत्नो मया ब्रह्मन्सौभ्रात्रे कौरवान्प्रति ।
न चाशक्यन्त संधातुं तेऽधर्मरुचयो मया ॥ ०१५ ॥

ततस्ते निधनं प्राप्ताः सर्वे ससुतबान्धवाः ।
न दिष्टमभ्यतिक्रान्तुं शक्यं बुद्ध्या बलेन वा ॥ ०१६ ॥

महर्षे विदितं नूनं सर्वमेतत्तवानघ ॥ ०१६ ॥

तेऽत्यक्रामन्मतिं मह्यं भीष्मस्य विदुरस्य च ।
ततो यमक्षयं जग्मुः समासाद्येतरेतरम् ॥ ०१७ ॥

पञ्च वै पाण्डवाः शिष्टा हतमित्रा हतात्मजाः ।
धार्तराष्ट्राश्च निहताः सर्वे ससुतबान्धवाः ॥ ०१८ ॥

इत्युक्तवचने कृष्णे भृशं क्रोधसमन्वितः ।
उत्तङ्कः प्रत्युवाचैनं रोषादुत्फाल्य लोचने ॥ ०१९ ॥

यस्माच्छक्तेन ते कृष्ण न त्राताः कुरुपाण्डवाः ।
संबन्धिनः प्रियास्तस्माच्छप्स्येऽहं त्वामसंशयम् ॥ ०२० ॥

न च ते प्रसभं यस्मात्ते निगृह्य निवर्तिताः ।
तस्मान्मन्युपरीतस्त्वां शप्स्यामि मधुसूदन ॥ ०२१ ॥

त्वया हि शक्तेन सता मिथ्याचारेण माधव ।
उपचीर्णाः कुरुश्रेष्ठा यस्त्वेतान्समुपेक्षथाः ॥ ०२२ ॥

वासुदेव उवाच ॥

शृणु मे विस्तरेणेदं यद्वक्ष्ये भृगुनन्दन ।
गृहाणानुनयं चापि तपस्वी ह्यसि भार्गव ॥ ०२३ ॥

श्रुत्वा त्वमेतदध्यात्मं मुञ्चेथाः शापमद्य वै ।
न च मां तपसाल्पेन शक्तोऽभिभवितुं पुमान् ॥ ०२४ ॥

न च ते तपसो नाशमिच्छामि जपतां वर ।
तपस्ते सुमहद्दीप्तं गुरवश्चापि तोषिताः ॥ ०२५ ॥

कौमारं ब्रह्मचर्यं ते जानामि द्विजसत्तम ।
दुःखार्जितस्य तपसस्तस्मान्नेच्छामि ते व्ययम् ॥ ०२६ ॥

---

# अध्याय ०५३

उत्तङ्क उवाच ॥

ब्रूहि केशव तत्त्वेन त्वमध्यात्ममनिन्दितम् ।
श्रुत्वा श्रेयोऽभिधास्यामि शापं वा ते जनार्दन ॥ ००१ ॥

वासुदेव उवाच ॥

तमो रजश्च सत्त्वं च विद्धि भावान्मदाश्रयान् ।
तथा रुद्रान्वसूंश्चापि विद्धि मत्प्रभवान्द्विज ॥ ००२ ॥

मयि सर्वाणि भूतानि सर्वभूतेषु चाप्यहम् ।

स्थित इत्यभिजानीहि मा तेऽभूदत्र संशयः ॥ ००३ ॥

तथा दैत्यगणान्सर्वान्यक्षराक्षसपन्नगान् ।
गन्धर्वाप्सरसश्चैव विद्धि मत्प्रभवान्द्विज ॥ ००४ ॥

सदसच्चैव यत्प्राहुरव्यक्तं व्यक्तमेव च ।
अक्षरं च क्षरं चैव सर्वमेतन्मदात्मकम् ॥ ००५ ॥

ये चाश्रमेषु वै धर्माश्चतुर्षु विहिता मुने ।
दैवानि चैव कर्माणि विद्धि सर्वं मदात्मकम् ॥ ००६ ॥

असच्च सदसच्चैव यद्विश्वं सदसतः परम् ।
ततः परं नास्ति चैव देवदेवात्सनातनात् ॥ ००७ ॥

ओङ्कारप्रभवान्वेदान्विद्धि मां त्वं भृगूद्वह ।
यूपं सोमं तथैवेह त्रिदशाप्यायनं मखे ॥ ००८ ॥

होतारमपि हव्यं च विद्धि मां भृगुनन्दन ।
अध्वर्युः कल्पकश्चापि हविः परमसंस्कृतम् ॥ ००९ ॥

उद्गाता चापि मां स्तौति गीतघोषैर्महाध्वरे ।
प्रायश्चित्तेषु मां ब्रह्मञ्शान्तिमङ्गलवाचकाः ॥ ०१० ॥

स्तुवन्ति विश्वकर्माणं सततं द्विजसत्तमाः ॥ ०१० ॥

विद्धि मह्यं सुतं धर्ममग्रजं द्विजसत्तम ।
मानसं दयितं विप्र सर्वभूतदयात्मकम् ॥ ०११ ॥

तत्राहं वर्तमानैश्च निवृत्तैश्चैव मानवैः ।
बह्वीः संसरमाणो वै योनीर्हि द्विजसत्तम ॥ ०१२ ॥

धर्मसंरक्षणार्थाय धर्मसंस्थापनाय च ।
तैस्तैर्वेषैश्च रूपैश्च त्रिषु लोकेषु भार्गव ॥ ०१३ ॥

अहं विष्णुरहं ब्रह्मा शक्रोऽथ प्रभवाप्ययः ।
भूतग्रामस्य सर्वस्य स्रष्टा संहार एव च ॥ ०१४ ॥

अधर्मे वर्तमानानां सर्वेषामहमप्युत ।
धर्मस्य सेतुं बध्नामि चलिते चलिते युगे ॥ ०१५ ॥

तास्ता योनीः प्रविश्याहं प्रजानां हितकाम्यया ॥ ०१५ ॥

यदा त्वहं देवयोनौ वर्तामि भृगुनन्दन ।
तदाहं देववत्सर्वमाचरामि न संशयः ॥ ०१६ ॥

यदा गन्धर्वयोनौ तु वर्तामि भृगुनन्दन ।
तदा गन्धर्ववच्चेष्टाः सर्वाश्चेष्टामि भार्गव ॥ ०१७ ॥

नागयोनौ यदा चैव तदा वर्तामि नागवत् ।
यक्षराक्षसयोनीश्च यथावद्विचराम्यहम् ॥ ०१८ ॥

मानुष्ये वर्तमाने तु कृपणं याचिता मया ।
न च ते जातसंमोहा वचो गृह्णन्ति मे हितम् ॥ ०१९ ॥

भयं च महदुद्दिश्य त्रासिताः कुरवो मया ।
क्रुद्धेव भूत्वा च पुनर्यथावदनुदर्शिताः ॥ ०२० ॥

तेऽधर्मेणेह संयुक्ताः परीताः कालधर्मणा ।
धर्मेण निहता युद्धे गताः स्वर्गं न संशयः ॥ ०२१ ॥

लोकेषु पाण्डवाश्चैव गताः ख्यातिं द्विजोत्तम ।
एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ॥ ०२२ ॥

# अध्याय ०५४

उत्तङ्क उवाच ॥

अभिजानामि जगतः कर्तारं त्वां जनार्दन ।
नूनं भवत्प्रसादोऽयमिति मे नास्ति संशयः ॥ ००१ ॥

चित्तं च सुप्रसन्नं मे त्वद्भावगतमच्युत ।
विनिवृत्तश्च मे कोप इति विद्धि परंतप ॥ ००२ ॥

यदि त्वनुग्रहं कञ्चित्त्वत्तोऽर्होऽहं जनार्दन ।
द्रष्टुमिच्छामि ते रूपमैश्वरं तन्निदर्शय ॥ ००३ ॥

वैशंपायन उवाच ॥

ततः स तस्मै प्रीतात्मा दर्शयामास तद्वपुः ।
शाश्वतं वैष्णवं धीमान्ददृशे यद्धनञ्जयः ॥ ००४ ॥

स ददर्श महात्मानं विश्वरूपं महाभुजम् ।
विस्मयं च ययौ विप्रस्तद्दृष्ट्वा रूपमैश्वरम् ॥ ००५ ॥

उत्तङ्क उवाच ॥

विश्वकर्मन्नमस्तेऽस्तु यस्य ते रूपमीदृशम् ।
पद्भ्यां ते पृथिवी व्याप्ता शिरसा चावृतं नभः ॥ ००६ ॥

द्यावापृथिव्योर्यन्मध्यं जठरेण तदावृतम् ।

भुजाभ्यामावृताश्चाशास्त्वमिदं सर्वमच्युत ॥ ००७ ॥

संहरस्व पुनर्देव रूपमक्षय्यमुत्तमम् ।
पुनस्त्वां स्वेन रूपेण द्रष्टुमिच्छामि शाश्वतम् ॥ ००८ ॥

वैशंपायन उवाच ॥

तमुवाच प्रसन्नात्मा गोविन्दो जनमेजय ।
वरं वृणीष्वेति तदा तमुत्तङ्कोऽब्रवीदिदम् ॥ ००९ ॥

पर्याप्त एष एवाद्य वरस्त्वत्तो महाद्युते ।
यत्ते रूपमिदं कृष्ण पश्यामि प्रभवाप्ययम् ॥ ०१० ॥

तमब्रवीत्पुनः कृष्णो मा त्वमत्र विचारय ।
अवश्यमेतत्कर्तव्यममोघं दर्शनं मम ॥ ०११ ॥

उत्तङ्क उवाच ॥

अवश्यकरणीयं वै यद्येतन्मन्यसे विभो ।
तोयमिच्छामि यत्रेष्टं मरुष्वेतद्धि दुर्लभम् ॥ ०१२ ॥

वैशंपायन उवाच ॥

ततः संहृत्य तत्तेजः प्रोवाचोत्तङ्कमीश्वरः ।
एष्टव्ये सति चिन्त्योऽहमित्युक्त्वा द्वारकां ययौ ॥ ०१३ ॥

ततः कदाचिद्भगवानुत्तङ्कस्तोयकाङ्क्षया ।
तृषितः परिचक्राम मरौ सस्मार चाच्युतम् ॥ ०१४ ॥

ततो दिग्वाससं धीमान्मातङ्गं मलपङ्किनम् ।
अपश्यत मरौ तस्मिञ्श्वयूथपरिवारितम् ॥ ०१५ ॥

भीषणं बद्धनिस्त्रिंशं बाणकार्मुकधारिणम् ।
तस्याधः स्रोतसोऽपश्यद्वारि भूरि द्विजोत्तमः ॥ ०१६ ॥

स्मरन्नेव च तं प्राह मातङ्गः प्रहसन्निव ।
एह्युत्तङ्क प्रतीच्छस्व मत्तो वारि भृगूद्वह ॥ ०१७ ॥

कृपा हि मे सुमहती त्वां दृष्ट्वा तृड्गमाहतम् ॥ ०१७ ॥

इत्युक्तस्तेन स मुनिस्तत्तोयं नाभ्यनन्दत ।
चिक्षेप च स तं धीमान्वाग्भिरुग्राभिरच्युतम् ॥ ०१८ ॥

पुनः पुनश्च मातङ्गः पिबस्वेति तमब्रवीत् ।
न चापिबत्स सक्रोधः क्षुभितेनान्तरात्मना ॥ ०१९ ॥

स तथा निश्चयात्तेन प्रत्याख्यातो महात्मना ।
श्वभिः सह महाराज तत्रैवान्तरधीयत ॥ ०२० ॥

उत्तङ्कस्तं तथा दृष्ट्वा ततो व्रीडितमानसः ।
मेने प्रलब्धमात्मानं कृष्णेनामित्रघातिना ॥ ०२१ ॥

अथ तेनैव मार्गेण शङ्खचक्रगदाधरः ।
आजगाम महाबाहुरुत्तङ्कश्चैनमब्रवीत् ॥ ०२२ ॥

न युक्तं तादृशं दातुं त्वया पुरुषसत्तम ।
सलिलं विप्रमुख्येभ्यो मातङ्गस्रोतसा विभो ॥ ०२३ ॥

इत्युक्तवचनं धीमान्महाबुद्धिर्जनार्दनः ।
उत्तङ्कं श्लक्ष्णया वाचा सान्त्वयन्निदमब्रवीत् ॥ ०२४ ॥

यादृशेनेह रूपेण योग्यं दातुं वृतेन वै ।
तादृशं खलु मे दत्तं त्वं तु तन्नावबुध्यसे ॥ ०२५ ॥

मया त्वदर्थमुक्तो हि वज्रपाणिः पुरंदरः ।
उत्तङ्कायामृतं देहि तोयरूपमिति प्रभुः ॥ ०२६ ॥

स मामुवाच देवेन्द्रो न मर्त्योऽमर्त्यतां व्रजेत् ।
अन्यमस्मै वरं देहीत्यसकृद्भृगुनन्दन ॥ ०२७ ॥

अमृतं देयमित्येव मयोक्तः स शचीपतिः ।
स मां प्रसाद्य देवेन्द्रः पुनरेवेदमब्रवीत् ॥ ०२८ ॥

यदि देयमवश्यं वै मातङ्गोऽहं महाद्युते ।
भूत्वामृतं प्रदास्यामि भार्गवाय महात्मने ॥ ०२९ ॥

यद्येवं प्रतिगृह्णाति भार्गवोऽमृतमद्य वै ।
प्रदातुमेष गच्छामि भार्गवायामृतं प्रभो ॥ ०३० ॥

प्रत्याख्यातस्त्वहं तेन न दद्यामिति भार्गव ॥ ०३० ॥

स तथा समयं कृत्वा तेन रूपेण वासवः ।
उपस्थितस्त्वया चापि प्रत्याख्यातोऽमृतं ददत् ॥ ०३१ ॥

चण्डालरूपी भगवान्सुमहांस्ते व्यतिक्रमः ॥ ०३१ ॥

यत्तु शक्यं मया कर्तुं भूय एव तवेप्सितम् ।
तोयेप्सां तव दुर्धर्ष करिष्ये सफलामहम् ॥ ०३२ ॥

येष्वहःसु तव ब्रह्मन्सलिलेच्छा भविष्यति ।
तदा मरौ भविष्यन्ति जलपूर्णाः पयोधराः ॥ ०३३ ॥

रसवच्च प्रदास्यन्ति ते तोयं भृगुनन्दन ।
उत्तङ्कमेघा इत्युक्ताः ख्यातिं यास्यन्ति चापि ते ॥ ०३४ ॥

इत्युक्तः प्रीतिमान्विप्रः कृष्णेन स बभूव ह ।
अद्याप्युत्तङ्कमेघाश्च मरौ वर्षन्ति भारत ॥ ०३५ ॥

---

# अध्याय ०५५

जनमेजय उवाच ॥

उत्तङ्कः केन तपसा संयुक्तः सुमहातपाः ।
यः शापं दातुकामोऽभूद्विष्णवे प्रभविष्णवे ॥ ००१ ॥

वैशंपायन उवाच ॥

उत्तङ्को महता युक्तस्तपसा जनमेजय ।
गुरुभक्तः स तेजस्वी नान्यं कञ्चिदपूजयत् ॥ ००२ ॥

सर्वेषामृषिपुत्राणामेष चासीन्मनोरथः ।
औत्तङ्कीं गुरुवृत्तिं वै प्राप्नुयामिति भारत ॥ ००३ ॥

गौतमस्य तु शिष्याणां बहूनां जनमेजय ।
उत्तङ्केऽभ्यधिका प्रीतिः स्नेहश्चैवाभवत्तदा ॥ ००४ ॥

स तस्य दमशौचाभ्यां विक्रान्तेन च कर्मणा ।
सम्यक्चैवोपचारेण गौतमः प्रीतिमानभूत् ॥ ००५ ॥

अथ शिष्यसहस्राणि समनुज्ञाय गौतमः ।
उत्तङ्कं परया प्रीत्या नाभ्यनुज्ञातुमैच्छत ॥ ००६ ॥

तं क्रमेण जरा तात प्रतिपेदे महामुनिम् ।
न चान्वबुध्यत तदा स मुनिर्गुरुवत्सलः ॥ ००७ ॥

ततः कदाचिद्राजेन्द्र काष्ठान्यानयितुं ययौ ।
उत्तङ्कः काष्ठभारं च महान्तं समुपानयत् ॥ ००८ ॥

स तु भाराभिभूतात्मा काष्ठभारमरिंदम ।
निष्पिपेष क्षितौ राजन्परिश्रान्तो बुभुक्षितः ॥ ००९ ॥

तस्य काष्ठे विलग्नाभूज्जटा रूप्यसमप्रभा ।
ततः काष्ठैः सह तदा पपात धरणीतले ॥ ०१० ॥

ततः स भारनिष्पिष्टः क्षुधाविष्टश्च भार्गवः ।
दृष्ट्वा तां वयसोऽवस्थां रुरोदार्तस्वरं तदा ॥ ०११ ॥

ततो गुरुसुता तस्य पद्मपत्रनिभेक्षणा ।
जग्राहाश्रूणि सुश्रोणी करेण पृथुलोचना ॥ ०१२ ॥

पितुर्नियोगाद्धर्मज्ञा शिरसावनता तदा ॥ ०१२ ॥

तस्या निपेततुर्दग्धौ करौ तैरश्रुबिन्दुभिः ।
न हि तानश्रुपातान्वै शक्ता धारयितुं मही ॥ ०१३ ॥

गौतमस्त्वब्रवीद्विप्रमुत्तङ्कं प्रीतमानसः ।
कस्मात्तात तवाद्येह शोकोत्तरमिदं मनः ॥ ०१४ ॥

स स्वैरं ब्रूहि विप्रर्षे श्रोतुमिच्छामि ते वचः ॥ ०१४ ॥

उत्तङ्क उवाच ॥

भवद्गतेन मनसा भवत्प्रियचिकीर्षया ।

भवद्भक्तिगतेनेह भवद्भावानुगेन च ॥ ०१५ ॥

जरेयं नावबुद्धा मे नाभिज्ञातं सुखं च मे ।
शतवर्षोषितं हि त्वं न मामभ्यनुजानथाः ॥ ०१६ ॥

भवता ह्यभ्यनुज्ञाताः शिष्याः प्रत्यवरा मया ।
उपपन्ना द्विजश्रेष्ठ शतशोऽथ सहस्रशः ॥ ०१७ ॥

गौतम उवाच ॥

त्वत्प्रीतियुक्तेन मया गुरुशुश्रूषया तव ।
व्यतिक्रामन्महान्कालो नावबुद्धो द्विजर्षभ ॥ ०१८ ॥

किं त्वद्य यदि ते श्रद्धा गमनं प्रति भार्गव ।
अनुज्ञां गृह्य मत्तस्त्वं गृहान्गच्छस्व मा चिरम् ॥ ०१९ ॥

उत्तङ्क उवाच ॥

गुर्वर्थं कं प्रयच्छामि ब्रूहि त्वं द्विजसत्तम ।
तमुपाकृत्य गच्छेयमनुज्ञातस्त्वया विभो ॥ ०२० ॥

गौतम उवाच ॥

दक्षिणा परितोषो वै गुरूणां सद्भिरुच्यते ।
तव ह्याचरतो ब्रह्मंस्तुष्टोऽहं वै न संशयः ॥ ०२१ ॥

इत्थं च परितुष्टं मां विजानीहि भृगूद्वह ।
युवा षोडशवर्षो हि यदद्य भविता भवान् ॥ ०२२ ॥

ददामि पत्नीं कन्यां च स्वां ते दुहितरं द्विज ।
एतामृते हि नान्या वै त्वत्तेजोऽर्हति सेवितुम् ॥ ०२३ ॥

ततस्तां प्रतिजग्राह युवा भूत्वा यशस्विनीम् ।
गुरुणा चाभ्यनुज्ञातो गुरुपत्नीमथाब्रवीत् ॥ ०२४ ॥

किं भवत्यै प्रयच्छामि गुर्वर्थं विनियुङ्क्ष्व माम् ।
प्रियं हि तव काङ्क्षामि प्राणैरपि धनैरपि ॥ ०२५ ॥

यद्दुर्लभं हि लोकेऽस्मिन्रत्नमत्यद्भुतं भवेत् ।
तदानयेयं तपसा न हि मेऽत्रास्ति संशयः ॥ ०२६ ॥

अहल्योवाच ॥

परितुष्टास्मि ते पुत्र नित्यं भगवता सह ।
पर्याप्तये तद्भद्रं ते गच्छ तात यथेच्छकम् ॥ ०२७ ॥

वैशंपायन उवाच ॥

उत्तङ्कस्तु महाराज पुनरेवाब्रवीद्वचः ।
आज्ञापयस्व मां मातः कर्तव्यं हि प्रियं तव ॥ ०२८ ॥

अहल्योवाच ॥

सौदासपत्न्या विदिते दिव्ये वै मणिकुण्डले ।
ते समानय भद्रं ते गुर्वर्थः सुकृतो भवेत् ॥ ०२९ ॥

स तथेति प्रतिश्रुत्य जगाम जनमेजय ।
गुरुपत्नीप्रियार्थं वै ते समानयितुं तदा ॥ ०३० ॥

स जगाम ततः शीघ्रमुत्तङ्को ब्राह्मणर्षभः ।
सौदासं पुरुषादं वै भिक्षितुं मणिकुण्डले ॥ ०३१ ॥

गौतमस्त्वब्रवीत्पत्नीमुत्तङ्को नाद्य दृश्यते ।
इति पृष्टा तमाचष्ट कुण्डलार्थं गतं तु वै ॥ ०३२ ॥

ततः प्रोवाच पत्नीं स न ते सम्यगिदं कृतम् ।
शप्तः स पार्थिवो नूनं ब्राह्मणं तं वधिष्यति ॥ ०३३ ॥

अहल्योवाच ॥

अजानन्त्या नियुक्तः स भगवन्ब्राह्मणोऽद्य मे ।
भवत्प्रसादान्न भयं किञ्चित्तस्य भविष्यति ॥ ०३४ ॥

इत्युक्तः प्राह तां पत्नीमेवमस्त्विति गौतमः ।
उत्तङ्कोऽपि वने शून्ये राजानं तं ददर्श ह ॥ ०३५ ॥

---

# अध्याय ०५६

वैशंपायन उवाच ॥

स तं दृष्ट्वा तथाभूतं राजानं घोरदर्शनम् ।
दीर्घश्मश्रुधरं नृणां शोणितेन समुक्षितम् ॥ ००१ ॥

चकार न व्यथां विप्रो राजा त्वेनमथाब्रवीत् ।
प्रत्युत्थाय महातेजा भयकर्ता यमोपमः ॥ ००२ ॥

दिष्ट्या त्वमसि कल्याण षष्ठे काले ममान्तिकम् ।
भक्षं मृगयमाणस्य संप्राप्तो द्विजसत्तम ॥ ००३ ॥

उत्तङ्क उवाच ॥

राजन्गुर्वर्थिनं विद्धि चरन्तं मामिहागतम् ।
न च गुर्वर्थमुद्युक्तं हिंस्यमाहुर्मनीषिणः ॥ ००४ ॥

राजोवाच ॥

षष्ठे काले ममाहारो विहितो द्विजसत्तम ।
न च शक्यः समुत्स्रष्टुं क्षुधितेन मयाद्य वै ॥ ००५ ॥

उत्तङ्क उवाच ॥

एवमस्तु महाराज समयः क्रियतां तु मे ।
गुर्वर्थमभिनिर्वर्त्य पुनरेष्यामि ते वशम् ॥ ००६ ॥

संश्रुतश्च मया योऽर्थो गुरवे राजसत्तम ।
त्वदधीनः स राजेन्द्र तं त्वा भिक्षे नरेश्वर ॥ ००७ ॥

ददासि विप्रमुख्येभ्यस्त्वं हि रत्नानि सर्वशः ।
दाता त्वं च नरव्याघ्र पात्रभूतः क्षिताविह ॥ ००८ ॥

पात्रं प्रतिग्रहे चापि विद्धि मां नृपसत्तम ॥ ००८ ॥

उपाकृत्य गुरोरर्थं त्वदायत्तमरिंदम ।
समयेनेह राजेन्द्र पुनरेष्यामि ते वशम् ॥ ००९ ॥

सत्यं ते प्रतिजानामि नात्र मिथ्यास्ति किञ्चन ।
अनृतं नोक्तपूर्वं मे स्वैरेष्वपि कुतोऽन्यथा ॥ ०१० ॥

सौदास उवाच ॥

यदि मत्तस्त्वदायत्तो गुर्वर्थः कृत एव सः ।
यदि चास्मि प्रतिग्राह्यः सांप्रतं तद्ब्रवीहि मे ॥ ०११ ॥

उत्तङ्क उवाच ॥

प्रतिग्राह्यो मतो मे त्वं सदैव पुरुषर्षभ ।
सोऽहं त्वामनुसंप्राप्तो भिक्षितुं मणिकुण्डले ॥ ०१२ ॥

सौदास उवाच ॥

पत्न्यास्ते मम विप्रर्षे रुचिरे मणिकुण्डले ।
वरयार्थं त्वमन्यं वै तं ते दास्यामि सुव्रत ॥ ०१३ ॥

उत्तङ्क उवाच ॥

अलं ते व्यपदेशेन प्रमाणं यदि ते वयम् ।
प्रयच्छ कुण्डले मे त्वं सत्यवाग्भव पार्थिव ॥ ०१४ ॥

वैशंपायन उवाच ॥

इत्युक्तस्त्वब्रवीद्राजा तमुत्तङ्कं पुनर्वचः ।
गच्छ मद्वचनाद्देवीं ब्रूहि देहीति सत्तम ॥ ०१५ ॥

सैवमुक्ता त्वया नूनं मद्वाक्येन शुचिस्मिता ।
प्रदास्यति द्विजश्रेष्ठ कुण्डले ते न संशयः ॥ ०१६ ॥

उत्तङ्क उवाच ॥

क्व पत्नी भवतः शक्या मया द्रष्टुं नरेश्वर ।
स्वयं वापि भवान्पत्नीं किमर्थं नोपसर्पति ॥ ०१७ ॥

सौदास उवाच ॥

द्रक्ष्यते तां भवानद्य कस्मिंश्चिद्वननिर्झरे ।
षष्ठे काले न हि मया सा शक्या द्रष्टुमद्य वै ॥ ०१८ ॥

उत्तङ्कस्तु तथोक्तः स जगाम भरतर्षभ ।
मदयन्तीं च दृष्ट्वा सोऽज्ञापयत्स्वं प्रयोजनम् ॥ ०१९ ॥

सौदासवचनं श्रुत्वा ततः सा पृथुलोचना ।
प्रत्युवाच महाबुद्धिमुत्तङ्कं जनमेजय ॥ ०२० ॥

एवमेतन्महाब्रह्मन्नानृतं वदसेऽनघ ।
अभिज्ञानं तु किञ्चित्त्वं समानेतुमिहार्हसि ॥ ०२१ ॥

इमे हि दिव्ये मणिकुण्डले मे ; देवाश्च यक्षाश्च महोरगाश्च ।
तैस्तैरुपायैः परिहर्तुकामा ;श्छिद्रेषु नित्यं परितर्कयन्ति ॥ ०२२ ॥

निक्षिप्तमेतद्भुवि पन्नगास्तु ; रत्नं समासाद्य परामृषेयुः ।
यक्षास्तथोच्छिष्टधृतं सुराश्च ; निद्रावशं त्वा परिधर्षयेयुः ॥ ०२३ ॥

छिद्रेष्वेतेषु हि सदा ह्यधृष्येषु द्विजर्षभ ।
देवराक्षसनागानामप्रमत्तेन धार्यते ॥ ०२४ ॥

स्यन्देते हि दिवा रुक्मं रात्रौ च द्विजसत्तम ।
नक्तं नक्षत्रताराणां प्रभामाक्षिप्य वर्तते ॥ ०२५ ॥

एते ह्यामुच्य भगवन्क्षुत्पिपासाभयं कुतः ।
विषाग्निश्वापदेभ्यश्च भयं जातु न विद्यते ॥ ०२६ ॥

ह्रस्वेन चैते आमुक्ते भवतो ह्रस्वके तदा ।
अनुरूपेण चामुक्ते तत्प्रमाणे हि जायतः ॥ ०२७ ॥

एवंविधे ममैते वै कुण्डले परमार्चिते ।
त्रिषु लोकेषु विख्याते तदभिज्ञानमानय ॥ ०२८ ॥

---

# अध्याय ०५७

वैशंपायन उवाच ॥

स मित्रसहमासाद्य त्वभिज्ञानमयाचत ।
तस्मै ददावभिज्ञानं स चेक्ष्वाकुवरस्तदा ॥ ००१ ॥

सौदास उवाच ॥

न चैवैषा गतिः क्षेम्या न चान्या विद्यते गतिः ।
एतन्मे मतमाज्ञाय प्रयच्छ मणिकुण्डले ॥ ००२ ॥

वैशंपायन उवाच ॥

इत्युक्तस्तामुत्तङ्कस्तु भर्तुर्वाक्यमथाब्रवीत् ।
श्रुत्वा च सा ततः प्रादात्तस्मै ते मणिकुण्डले ॥ ००३ ॥

अवाप्य कुण्डले ते तु राजानं पुनरब्रवीत् ।
किमेतद्गुह्यवचनं श्रोतुमिच्छामि पार्थिव ॥ ००४ ॥

सौदास उवाच ॥

प्रजा निसर्गाद्विप्रान्वै क्षत्रियाः पूजयन्ति ह ।
विप्रेभ्यश्चापि बहवो दोषाः प्रादुर्भवन्ति नः ॥ ००५ ॥

सोऽहं द्विजेभ्यः प्रणतो विप्राद्दोषमवाप्तवान् ।
गतिमन्यां न पश्यामि मदयन्तीसहायवान्  ॥ ००६  ॥

स्वर्गद्वारस्य गमने स्थाने चेह द्विजोत्तम  ॥ ००६  ॥

न हि राज्ञा विशेषेण विरुद्धेन द्विजातिभिः ।
शक्यं नृलोके संस्थातुं प्रेत्य वा सुखमेधितुम्  ॥ ००७  ॥

तदिष्टे ते मयैवैते दत्ते स्वे मणिकुण्डले ।
यः कृतस्तेऽद्य समयः सफलं तं कुरुष्व मे  ॥ ००८  ॥

उत्तङ्क उवाच  ॥

राजंस्तथेह कर्तास्मि पुनरेष्यामि ते वशम् ।
प्रश्नं तु कञ्चित्प्रष्टुं त्वां व्यवसिष्ये परंतप  ॥ ००९  ॥

सौदास उवाच  ॥

ब्रूहि विप्र यथाकामं प्रतिवक्तास्मि ते वचः ।
छेत्तास्मि संशयं तेऽद्य न मेऽत्रास्ति विचारणा  ॥ ०१०  ॥

उत्तङ्क उवाच  ॥

प्राहुर्वाक्सङ्गतं मित्रं धर्मनैपुण्यदर्शिनः ।
मित्रेषु यश्च विषमः स्तेन इत्येव तं विदुः  ॥ ०११  ॥

स भवान्मित्रतामद्य संप्राप्तो मम पार्थिव ।
स मे बुद्धिं प्रयच्छस्व समां बुद्धिमतां वर  ॥ ०१२  ॥

अवाप्तार्थोऽहमद्येह भवांश्च पुरुषादकः ।
भवत्सकाशमागन्तुं क्षमं मम न वेति वा  ॥ ०१३  ॥

सौदास उवाच ॥

क्षमं चेदिह वक्तव्यं मया द्विजवरोत्तम ।
मत्समीपं द्विजश्रेष्ठ नागन्तव्यं कथञ्चन ॥ ०१४ ॥

एवं तव प्रपश्यामि श्रेयो भृगुकुलोद्वह ।
आगच्छतो हि ते विप्र भवेन्मृत्युरसंशयम् ॥ ०१५ ॥

वैशंपायन उवाच ॥

इत्युक्तः स तदा राज्ञा क्षमं बुद्धिमता हितम् ।
समनुज्ञाप्य राजानमहल्यां प्रति जग्मिवान् ॥ ०१६ ॥

गृहीत्वा कुण्डले दिव्ये गुरुपत्न्याः प्रियङ्करः ।
जवेन महता प्रायाद्गौतमस्याश्रमं प्रति ॥ ०१७ ॥

यथा तयो रक्षणं च मदयन्त्याभिभाषितम् ।
तथा ते कुण्डले बद्ध्वा तथा कृष्णाजिनेऽनयत् ॥ ०१८ ॥

स कस्मिंश्चित्क्षुधाविष्टः फलभारसमन्वितम् ।
बिल्वं ददर्श कस्मिंश्चिदारुरोह क्षुधान्वितः ॥ ०१९ ॥

शाखास्वासज्य तस्यैव कृष्णाजिनमरिंदम ।
यस्मिंस्ते कुण्डले बद्धे तदा द्विजवरेण वै ॥ ०२० ॥

विशीर्णबन्धने तस्मिन्गते कृष्णाजिने महीम् ।
अपश्यद्भुजगः कश्चित्ते तत्र मणिकुण्डले ॥ ०२१ ॥

ऐरावतकुलोत्पन्नः शीघ्रो भूत्वा तदा स वै ।
विदश्यास्येन वल्मीकं विवेशाथ स कुण्डले ॥ ०२२ ॥

ह्रियमाणे तु दृष्ट्वा स कुण्डले भुजगेन ह ।
पपात वृक्षात्सोद्वेगो दुःखात्परमकोपनः ॥ ०२३ ॥

स दण्डकाष्ठमादाय वल्मीकमखनत्तदा ।
क्रोधामर्षाभितप्ताङ्गस्ततो वै द्विजपुङ्गवः ॥ ०२४ ॥

तस्य वेगमसह्यं तमसहन्ती वसुंधरा ।
दण्डकाष्ठाभिनुन्नाङ्गी चचाल भृशमातुरा ॥ ०२५ ॥

ततः खनत एवाथ विप्रर्षेर्धरणीतलम् ।
नागलोकस्य पन्थानं कर्तुकामस्य निश्चयात् ॥ ०२६ ॥

रथेन हरियुक्तेन तं देशमुपजग्मिवान् ।
वज्रपाणिर्महातेजा ददर्श च द्विजोत्तमम् ॥ ०२७ ॥

स तु तं ब्राह्मणो भूत्वा तस्य दुःखेन दुःखितः ।
उत्तङ्कमब्रवीत्तात नैतच्छक्यं त्वयेति वै ॥ ०२८ ॥

इतो हि नागलोको वै योजनानि सहस्रशः ।
न दण्डकाष्ठसाध्यं च मन्ये कार्यमिदं तव ॥ ०२९ ॥

उत्तङ्क उवाच ॥

नागलोके यदि ब्रह्मन्न शक्ये कुण्डले मया ।
प्राप्तुं प्राणान्विमोक्ष्यामि पश्यतस्ते द्विजोत्तम ॥ ०३० ॥

यदा स नाशकत्तस्य निश्चयं कर्तुमन्यथा ।
वज्रपाणिस्तदा दण्डं वज्रास्त्रेण युयोज ह ॥ ०३१ ॥

ततो वज्रप्रहारैस्तैर्दार्यमाणा वसुंधरा ।

नागलोकस्य पन्थानमकरोज्जनमेजय ॥ ०३२ ॥

स तेन मार्गेण तदा नागलोकं विवेश ह ।
ददर्श नागलोकं च योजनानि सहस्रशः ॥ ०३३ ॥

प्राकारनिचयैर्दिव्यैर्मणिमुक्ताभ्यलङ्कृतैः ।
उपपन्नं महाभाग शातकुम्भमयैस्तथा ॥ ०३४ ॥

वापीः स्फटिकसोपाना नदीश्च विमलोदकाः ।
ददर्श वृक्षांश्च बहून्नानाद्विजगणायुतान् ॥ ०३५ ॥

तस्य लोकस्य च द्वारं ददर्श स भृगूद्वहः ।
पञ्चयोजनविस्तारमायतं शतयोजनम् ॥ ०३६ ॥

नागलोकमुत्तङ्कस्तु प्रेक्ष्य दीनोऽभवत्तदा ।
निराशश्चाभवत्तात कुण्डलाहरणे पुनः ॥ ०३७ ॥

तत्र प्रोवाच तुरगस्तं कृष्णश्वेतवालधिः ।
ताम्रास्यनेत्रः कौरव्य प्रज्वलन्निव तेजसा ॥ ०३८ ॥

धमस्वापानमेतन्मे ततस्त्वं विप्र लप्स्यसे ।
ऐरावतसुतेनेह तवानीते हि कुण्डले ॥ ०३९ ॥

मा जुगुप्सां कृथाः पुत्र त्वमत्रार्थे कथञ्चन ।
त्वयैतद्धि समाचीर्णं गौतमस्याश्रमे तदा ॥ ०४० ॥

उत्तङ्क उवाच ॥

कथं भवन्तं जानीयामुपाध्यायाश्रमं प्रति ।
यन्मया चीर्णपूर्वं च श्रोतुमिच्छामि तद्ध्यहम् ॥ ०४१ ॥

अश्व उवाच ॥

गुरोर्गुरुं मां जानीहि ज्वलितं जातवेदसम् ।
त्वया ह्यहं सदा वत्स गुरोरर्थेऽभिपूजितः ॥ ०४२ ॥

सततं पूजितो विप्र शुचिना भृगुनन्दन ।
तस्माच्छ्रेयो विधास्यामि तवैवं कुरु मा चिरम् ॥ ०४३ ॥

इत्युक्तः स तथाकार्षीदुत्तङ्कश्चित्रभानुना ।
घृतार्चिः प्रीतिमांश्चापि प्रजज्वाल दिधक्षया ॥ ०४४ ॥

ततोऽस्य रोमकूपेभ्यो ध्मायमानस्य भारत ।
घनः प्रादुरभूद्धूमो नागलोकभयावहः ॥ ०४५ ॥

तेन धूमेन सहसा वर्धमानेन भारत ।
नागलोके महाराज न प्रज्ञायत किञ्चन ॥ ०४६ ॥

हाहाकृतमभूत्सर्वमैरावतनिवेशनम् ।
वासुकिप्रमुखानां च नागानां जनमेजय ॥ ०४७ ॥

न प्रकाशन्त वेश्मानि धूमरुद्धानि भारत ।
नीहारसंवृतानीव वनानि गिरयस्तथा ॥ ०४८ ॥

ते धूमरक्तनयना वह्नितेजोभितापिताः ।
आजग्मुर्निश्चयं ज्ञातुं भार्गवस्यातितेजसः ॥ ०४९ ॥

श्रुत्वा च निश्चयं तस्य महर्षेस्तिग्मतेजसः ।
संभ्रान्तमनसः सर्वे पूजां चक्रुर्यथाविधि ॥ ०५० ॥

सर्वे प्राञ्जलयो नागा वृद्धबालपुरोगमाः ।
शिरोभिः प्रणिपत्योचुः प्रसीद भगवन्निति ॥ ०५१ ॥

प्रसाद्य ब्राह्मणं ते तु पाद्यमर्घ्यं निवेद्य च ।
प्रायच्छन्कुण्डले दिव्ये पन्नगाः परमार्चिते ॥ ०५२ ॥

ततः संपूजितो नागैस्तत्रोत्तङ्कः प्रतापवान् ।
अग्निं प्रदक्षिणं कृत्वा जगाम गुरुसद्म तत् ॥ ०५३ ॥

स गत्वा त्वरितो राजन्गौतमस्य निवेशनम् ।
प्रायच्छत्कुण्डले दिव्ये गुरुपत्न्यै तदानघ ॥ ०५४ ॥

एवं महात्मना तेन त्री.ण्ल्लोकाञ्जनमेजय ।
परिक्रम्याहृते दिव्ये ततस्ते मणिकुण्डले ॥ ०५५ ॥

एवंप्रभावः स मुनिरुत्तङ्को भरतर्षभ ।
परेण तपसा युक्तो यन्मां त्वं परिपृच्छसि ॥ ०५६ ॥

---

# वासुदेवेन वसुदेवं प्रति युद्धाख्यानम्

## अध्याय ०५८

जनमेजय उवाच ॥

उत्तङ्काय वरं दत्त्वा गोविन्दो द्विजसत्तम ।
अत ऊर्ध्वं महाबाहुः किं चकार महायशाः ॥ ००१ ॥

वैशंपायन उवाच ॥

दत्त्वा वरमुत्तङ्काय प्रायात्सात्यकिना सह ।
द्वारकामेव गोविन्दः शीघ्रवेगैर्महाहयैः ॥ ००२ ॥

सरांसि च नदीश्चैव वनानि विविधानि च ।
अतिक्रम्य ससादाथ रम्यां द्वारवतीं पुरीम् ॥ ००३ ॥

वर्तमाने महाराज महे रैवतकस्य च ।
उपायात्पुण्डरीकाक्षो युयुधानानुगस्तदा ॥ ००४ ॥

अलङ्कृतस्तु स गिरिर्नानारूपविचित्रितैः ।
बभौ रुक्ममयैः काशैः सर्वतः पुरुषर्षभ ॥ ००५ ॥

काञ्चनस्रग्भिरग्र्याभिः सुमनोभिस्तथैव च ।
वासोभिश्च महाशैलः कल्पवृक्षैश्च सर्वशः ॥ ००६ ॥

दीपवृक्षैश्च सौवर्णैरभीक्ष्णमुपशोभितः ।
गुहानिर्झरदेशेषु दिवाभूतो बभूव ह ॥ ००७ ॥

पताकाभिर्विचित्राभिः सघण्टाभिः समन्ततः ।
पुंभिः स्त्रीभिश्च संघुष्टः प्रगीत इव चाभवत् ॥ ००८ ॥

अतीव प्रेक्षणीयोऽभून्मेरुर्मुनिगणैरिव ॥ ००८ ॥

मत्तानां हृष्टरूपाणां स्त्रीणां पुंसां च भारत ।
गायतां पर्वतेन्द्रस्य दिवस्पृगिव निस्वनः ॥ ००९ ॥

प्रमत्तमत्तसंमत्तक्ष्वेडितोत्कृष्टसङ्कुला ।
तथा किलकिलाशब्दैर्भूरभूत्सुमनोहरा ॥ ०१० ॥

विपणापणवान्रम्यो भक्ष्यभोज्यविहारवान् ।
वस्त्रमाल्योत्करयुतो वीणावेणुमृदङ्गवान् ॥ ०११ ॥

सुरामैरेयमिश्रेण भक्ष्यभोज्येन चैव ह ।
दीनान्धकृपणादिभ्यो दीयमानेन चानिशम्  ॥ ०१२  ॥

बभौ परमकल्याणो महस्तस्य महागिरेः  ॥ ०१२  ॥

पुण्यावसथवान्वीर पुण्यकृद्भिर्निषेवितः ।
विहारो वृष्णिवीराणां महे रैवतकस्य ह  ॥ ०१३  ॥

स नगो वेश्मसङ्कीर्णो देवलोक इवाबभौ  ॥ ०१३  ॥

तदा च कृष्णसांनिध्यमासाद्य भरतर्षभ ।
शक्रसद्मप्रतीकाशो बभूव स हि शैलराट्  ॥ ०१४  ॥

ततः संपूज्यमानः स विवेश भवनं शुभम् ।
गोविन्दः सात्यकिश्चैव जगाम भवनं स्वकम्  ॥ ०१५  ॥

विवेश च स हृष्टात्मा चिरकालप्रवासकः ।
कृत्वा नसुकरं कर्म दानवेष्विव वासवः  ॥ ०१६  ॥

उपयातं तु वार्ष्णेयं भोजवृष्ण्यन्धकास्तदा ।
अभ्यगच्छन्महात्मानं देवा इव शतक्रतुम्  ॥ ०१७  ॥

स तानभ्यर्च्य मेधावी पृष्ट्वा च कुशलं तदा ।
अभ्यवादयत प्रीतः पितरं मातरं तथा  ॥ ०१८  ॥

ताभ्यां च संपरिष्वक्तः सान्त्वितश्च महाभुजः ।
उपोपविष्टस्तैः सर्वैर्वृष्णिभिः परिवारितः  ॥ ०१९  ॥

स विश्रान्तो महातेजाः कृतपादावसेचनः ।
कथयामास तं कृष्णः पृष्टः पित्रा महाहवम्  ॥ ०२०  ॥

# अध्याय ०५९

वसुदेव उवाच ॥

श्रुतवानस्मि वार्ष्णेय सङ्ग्रामं परमाद्भुतम् ।
नराणां वदतां पुत्र कथोद्धातेषु नित्यशः ॥ ००१ ॥

त्वं तु प्रत्यक्षदर्शी च कार्यज्ञश्च महाभुज ।
तस्मात्प्रब्रूहि सङ्ग्रामं याथातथ्येन मेऽनघ ॥ ००२ ॥

यथा तदभवद्युद्धं पाण्डवानां महात्मनाम् ।
भीष्मकर्णकृपद्रोणशल्यादिभिरनुत्तमम् ॥ ००३ ॥

अन्येषां क्षत्रियाणां च कृतास्त्राणामनेकशः ।
नानावेषाकृतिमतां नानादेशनिवासिनाम् ॥ ००४ ॥

इत्युक्तः पुण्डरीकाक्षः पित्रा मातुस्तदन्तिके ।
शशंस कुरुवीराणां सङ्ग्रामे निधनं यथा ॥ ००५ ॥

वासुदेव उवाच ॥

अत्यद्भुतानि कर्माणि क्षत्रियाणां महात्मनाम् ।
बहुलत्वान्न संख्यातुं शक्यान्यब्दशतैरपि ॥ ००६ ॥

प्राधान्यतस्तु गदतः समासेनैव मे शृणु ।
कर्माणि पृथिवीशानां यथावदमरद्युते ॥ ००७ ॥

भीष्मः सेनापतिरभूदेकादशचमूपतिः ।
कौरव्यः कौरवेयाणां देवानामिव वासवः ॥ ००८ ॥

शिखण्डी पाण्डुपुत्राणां नेता सप्तचमूपतिः ।
बभूव रक्षितो धीमान्धीमता सव्यसाचिना ॥ ००९ ॥

तेषां तदभवद्युद्धं दशाहानि महात्मनाम् ।
कुरूणां पाण्डवानां च सुमहद्रोमहर्षणम् ॥ ०१० ॥

ततः शिखण्डी गाङ्गेयमयुध्यन्तं महाहवे ।
जघान बहुभिर्बाणैः सह गाण्डीवधन्वना ॥ ०११ ॥

अकरोत्स ततः कालं शरतल्पगतो मुनिः ।
अयनं दक्षिणं हित्वा संप्राप्ते चोत्तरायणे ॥ ०१२ ॥

ततः सेनापतिरभूद्द्रोणोऽस्त्रविदुषां वरः ।
प्रवीरः कौरवेन्द्रस्य काव्यो दैत्यपतेरिव ॥ ०१३ ॥

अक्षौहिणीभिः शिष्टाभिर्नवभिर्द्विजसत्तमः ।
संवृतः समरश्लाघी गुप्तः कृपवृषादिभिः ॥ ०१४ ॥

धृष्टद्युम्नस्त्वभून्नेता पाण्डवानां महास्त्रवित् ।
गुप्तो भीमेन तेजस्वी मित्रेण वरुणो यथा ॥ ०१५ ॥

पञ्चसेनापरिवृतो द्रोणप्रेप्सुर्महामनाः ।
पितुर्निकारान्संस्मृत्य रणे कर्माकरोन्महत् ॥ ०१६ ॥

तस्मिंस्ते पृथिवीपाला द्रोणपार्षतसङ्गरे ।
नानादिगागता वीराः प्रायशो निधनं गताः ॥ ०१७ ॥

दिनानि पञ्च तद्युद्धमभूत्परमदारुणम् ।
ततो द्रोणः परिश्रान्तो धृष्टद्युम्नवशं गतः ॥ ०१८ ॥

ततः सेनापतिरभूत्कर्णो दौर्योधने बले ।
अक्षौहिणीभिः शिष्टाभिर्वृतः पञ्चभिराहवे ॥ ०१९ ॥

तिस्रस्तु पाण्डुपुत्राणां चम्वो बीभत्सुपालिताः ।
हतप्रवीरभूयिष्ठा बभूवुः समवस्थिताः ॥ ०२० ॥

ततः पार्थं समासाद्य पतङ्ग इव पावकम् ।
पञ्चत्वमगमत्सौतिर्द्वितीयेऽहनि दारुणे ॥ ०२१ ॥

हते कर्णे तु कौरव्या निरुत्साहा हतौजसः ।
अक्षौहिणीभिस्तिसृभिर्मद्रेशं पर्यवारयन् ॥ ०२२ ॥

हतवाहनभूयिष्ठाः पाण्डवास्तु युधिष्ठिरम् ।
अक्षौहिण्या निरुत्साहाः शिष्टया पर्यवारयन् ॥ ०२३ ॥

अवधीन्मद्रराजानं कुरुराजो युधिष्ठिरः ।
तस्मिंस्तथार्धदिवसे कर्म कृत्वा सुदुष्करम् ॥ ०२४ ॥

हते शल्ये तु शकुनिं सहदेवो महामनाः ।
आहर्तारं कलेस्तस्य जघानामितविक्रमः ॥ ०२५ ॥

निहते शकुनौ राजा धार्तराष्ट्रः सुदुर्मनाः ।
अपाक्रामद्गदापाणिर्हतभूयिष्ठसैनिकः ॥ ०२६ ॥

तमन्वधावत्सङ्क्रुद्धो भीमसेनः प्रतापवान् ।
ह्रदे द्वैपायने चापि सलिलस्थं ददर्श तम् ॥ ०२७ ॥

ततः शिष्टेन सैन्येन समन्तात्परिवार्य तम् ।
उपोपविविशुर्हृष्टा ह्रदस्थं पञ्च पाण्डवाः ॥ ०२८ ॥

विगाह्य सलिलं त्वाशु वाग्बाणैर्भृशविक्षतः ।
उत्थाय स गदापाणिर्युद्धाय समुपस्थितः ॥ ०२९ ॥

ततः स निहतो राजा धार्तराष्ट्रो महामृधे ।
भीमसेनेन विक्रम्य पश्यतां पृथिवीक्षिताम् ॥ ०३० ॥

ततस्तत्पाण्डवं सैन्यं संसुप्तं शिबिरे निशि ।
निहतं द्रोणपुत्रेण पितुर्वधममृष्यता ॥ ०३१ ॥

हतपुत्रा हतबला हतमित्रा मया सह ।
युयुधानद्वितीयेन पञ्च शिष्टाः स्म पाण्डवाः ॥ ०३२ ॥

सहैव कृपभोजाभ्यां द्रौणिर्युद्धादमुच्यत ।
युयुत्सुश्चापि कौरव्यो मुक्तः पाण्डवसंश्रयात् ॥ ०३३ ॥

निहते कौरवेन्द्रे च सानुबन्धे सुयोधने ।
विदुरः सञ्जयश्चैव धर्मराजमुपस्थितौ ॥ ०३४ ॥

एवं तदभवद्युद्धमहान्यष्टादश प्रभो ।
यत्र ते पृथिवीपाला निहताः स्वर्गमावसन् ॥ ०३५ ॥

वैशंपायन उवाच ॥

शृण्वतां तु महाराज कथां तां रोमहर्षणीम् ।
दुःखहर्षपरिक्लेशा वृष्णीनामभवंस्तदा ॥ ०३६ ॥

# अध्याय ०६०

वैशंपायन उवाच ॥

कथयन्नेव तु तदा वासुदेवः प्रतापवान् ।
महाभारतयुद्धं तत्कथान्ते पितुरग्रतः ॥ ००१ ॥

अभिमन्योर्वधं वीरः सोऽत्यक्रामत भारत ।
अप्रियं वसुदेवस्य मा भूदिति महामनाः ॥ ००२ ॥

मा दौहित्रवधं श्रुत्वा वसुदेवो महात्ययम् ।
दुःखशोकाभिसंतप्तो भवेदिति महामतिः ॥ ००३ ॥

सुभद्रा तु तमुत्क्रान्तमात्मजस्य वधं रणे ।
आचक्ष्व कृष्ण सौभद्रवधमित्यपतद्भुवि ॥ ००४ ॥

तामपश्यन्निपतितां वसुदेवः क्षितौ तदा ।
दृष्ट्वैव च पपातोर्व्यां सोऽपि दुःखेन मूर्छितः ॥ ००५ ॥

ततः स दौहित्रवधाद्दुःखशोकसमन्वितः ।
वसुदेवो महाराज कृष्णं वाक्यमथाब्रवीत् ॥ ००६ ॥

ननु त्वं पुण्डरीकाक्ष सत्यवाग्भुवि विश्रुतः ।
यद्दौहित्रवधं मेऽद्य न ख्यापयसि शत्रुहन् ॥ ००७ ॥

तद्भागिनेयनिधनं तत्त्वेनाचक्ष्व मे विभो ।
सदृशाक्षस्तव कथं शत्रुभिर्निहतो रणे ॥ ००८ ॥

दुर्मरं बत वार्ष्णेय कालेऽप्राप्ते नृभिः सदा ।
यत्र मे हृदयं दुःखाच्छतधा न विदीर्यते ॥ ००९ ॥

किमब्रवीत्त्वा सङ्ग्रामे सुभद्रां मातरं प्रति ।
मां चापि पुण्डरीकाक्ष चपलाक्षः प्रियो मम ॥ ०१० ॥

आहवं पृष्ठतः कृत्वा कच्चिन्न निहतः परैः ।
कच्चिन्मुखं न गोविन्द तेनाजौ विकृतं कृतम् ॥ ०११ ॥

स हि कृष्ण महातेजाः श्लाघन्निव ममाग्रतः ।
बालभावेन विजयमात्मनोऽकथयत्प्रभुः ॥ ०१२ ॥

कच्चिन्न विकृतो बालो द्रोणकर्णकृपादिभिः ।
धरण्यां निहतः शेते तन्ममाचक्ष्व केशव ॥ ०१३ ॥

स हि द्रोणं च भीष्मं च कर्णं च रथिनां वरम् ।
स्पर्धते स्म रणे नित्यं दुहितुः पुत्रको मम ॥ ०१४ ॥

एवंविधं बहु तदा विलपन्तं सुदुःखितम् ।
पितरं दुःखिततरो गोविन्दो वाक्यमब्रवीत् ॥ ०१५ ॥

न तेन विकृतं वक्त्रं कृतं सङ्ग्राममूर्धनि ।
न पृष्ठतः कृतश्चापि सङ्ग्रामस्तेन दुस्तरः ॥ ०१६ ॥

निहत्य पृथिवीपालान्सहस्रशतसंघशः ।
खेदितो द्रोणकर्णाभ्यां दौःशासनिवशं गतः ॥ ०१७ ॥

एको ह्येकेन सततं युध्यमानो यदि प्रभो ।
न स शक्येत सङ्ग्रामे निहन्तुमपि वज्रिणा ॥ ०१८ ॥

समाहूते तु सङ्ग्रामे पार्थे संशप्तकैस्तदा ।
पर्यवार्यत सङ्क्रुद्धैः स द्रोणादिभिराहवे ॥ ०१९ ॥

ततः शत्रुक्षयं कृत्वा सुमहान्तं रणे पितुः ।

दौहित्रस्तव वार्ष्णेय दौःशासनिवशं गतः ॥ ०२० ॥

नूनं च स गतः स्वर्गं जहि शोकं महामते ।
न हि व्यसनमासाद्य सीदन्ते सन्नराः क्वचित् ॥ ०२१ ॥

द्रोणकर्णप्रभृतयो येन प्रतिसमासिताः ।
रणे महेन्द्रप्रतिमाः स कथं नाप्नुयाद्दिवम् ॥ ०२२ ॥

स शोकं जहि दुर्धर्ष मा च मन्युवशं गमः ।
शस्त्रपूतां हि स गतिं गतः परपुरञ्जयः ॥ ०२३ ॥

तस्मिंस्तु निहते वीरे सुभद्रेयं स्वसा मम ।
दुःखार्ताथो पृथां प्राप्य कुररीव ननाद ह ॥ ०२४ ॥

द्रौपदीं च समासाद्य पर्यपृच्छत दुःखिता ।
आर्ये क्व दारकाः सर्वे द्रष्टुमिच्छामि तानहम् ॥ ०२५ ॥

अस्यास्तु वचनं श्रुत्वा सर्वास्ताः कुरुयोषितः ।
भुजाभ्यां परिगृह्यैनां चुक्रुशुः परमार्तवत् ॥ ०२६ ॥

उत्तरां चाब्रवीद्भद्रा भद्रे भर्ता क्व ते गतः ।
क्षिप्रमागमनं मह्यं तस्मै त्वं वेदयस्व ह ॥ ०२७ ॥

ननु नाम स वैराटि श्रुत्वा मम गिरं पुरा ।
भवनान्निष्पतत्याशु कस्मान्नाभ्येति ते पतिः ॥ ०२८ ॥

अभिमन्यो कुशलिनो मातुलास्ते महारथाः ।
कुशलं चाब्रुवन्सर्वे त्वां युयुत्सुमिहागतम् ॥ ०२९ ॥

आचक्ष्व मेऽद्य सङ्ग्रामं यथापूर्वमरिंदम ।
कस्मादेव विलपतीं नाद्येह प्रतिभाषसे ॥ ०३० ॥

एवमादि तु वार्ष्णेय्यास्तदस्याः परिदेवितम् ।
श्रुत्वा पृथा सुदुःखार्ता शनैर्वाक्यमथाब्रवीत् ॥ ०३१ ॥

सुभद्रे वासुदेवेन तथा सात्यकिना रणे ।
पित्रा च पालितो बालः स हतः कालधर्मणा ॥ ०३२ ॥

ईदृशो मर्त्यधर्मोऽयं मा शुचो यदुनन्दिनि ।
पुत्रो हि तव दुर्धर्षः संप्राप्तः परमां गतिम् ॥ ०३३ ॥

कुले महति जातासि क्षत्रियाणां महात्मनाम् ।
मा शुचश्चपलाक्षं त्वं पुण्डरीकनिभेक्षणे ॥ ०३४ ॥

उत्तरां त्वमवेक्षस्व गर्भिणीं मा शुचः शुभे ।
पुत्रमेषा हि तस्याशु जनयिष्यति भामिनी ॥ ०३५ ॥

एवमाश्वासयित्वैनां कुन्ती यदुकुलोद्वह ।
विहाय शोकं दुर्धर्षं श्राद्धमस्य ह्यकल्पयत् ॥ ०३६ ॥

समनुज्ञाप्य धर्मज्ञा राजानं भीममेव च ।
यमौ यमोपमौ चैव ददौ दानान्यनेकशः ॥ ०३७ ॥

ततः प्रदाय बह्वीर्गा ब्राह्मणेभ्यो यदूद्वह ।
समहृष्यत वार्ष्णेयी वैराटीं चाब्रवीदिदम् ॥ ०३८ ॥

वैराटि नेह संतापस्त्वया कार्यो यशस्विनि ।
भर्तारं प्रति सुश्रोणि गर्भस्थं रक्ष मे शिशुम् ॥ ०३९ ॥

एवमुक्त्वा ततः कुन्ती विरराम महाद्युते ।
तामनुज्ञाप्य चैवेमां सुभद्रां समुपानयम् ॥ ०४० ॥

एवं स निधनं प्राप्तो दौहित्रस्तव माधव ।
संतापं जहि दुर्धर्ष मा च शोके मनः कृथाः ॥ ०४१ ॥

---

# वसुदेवेन अभिमन्योः श्राद्धदानम्

## अध्याय ०६१

वैशंपायन उवाच ॥

एतच्छ्रुत्वा तु पुत्रस्य वचः शूरात्मजस्तदा ।
विहाय शोकं धर्मात्मा ददौ श्राद्धमनुत्तमम् ॥ ००१ ॥

तथैव वासुदेवोऽपि स्वस्रीयस्य महात्मनः ।
दयितस्य पितुर्नित्यमकरोदौर्ध्वदेहिकम् ॥ ००२ ॥

षष्टिं शतसहस्राणि ब्राह्मणानां महाभुजः ।
विधिवद्भोजयामास भोज्यं सर्वगुणान्वितम् ॥ ००३ ॥

आच्छाद्य च महाबाहुर्धनतृष्णामपानुदत् ।
ब्राह्मणानां तदा कृष्णस्तदभूद्रोमहर्षणम् ॥ ००४ ॥

सुवर्णं चैव गाश्चैव शयनाच्छादनं तथा ।
दीयमानं तदा विप्राः प्रभूतमिति चाब्रुवन् ॥ ००५ ॥

वासुदेवोऽथ दाशार्हो बलदेवः ससात्यकिः ।
अभिमन्योस्तदा श्राद्धमकुर्वन्सत्यकस्तदा ॥ ००६ ॥

अतीव दुःखसंतप्ता न शमं चोपलेभिरे ॥ ००६ ॥

तथैव पाण्डवा वीरा नगरे नागसाह्वये ।
नोपगच्छन्ति वै शान्तिमभिमन्युविनाकृताः ॥ ००७ ॥

सुबहूनि च राजेन्द्र दिवसानि विराटजा ।
नाभुङ्क्त पतिशोकार्ता तदभूत्करुणं महत् ॥ ००८ ॥

कुक्षिस्थ एव तस्यास्तु स गर्भः संप्रलीयत ॥ ००८ ॥

आजगाम ततो व्यासो ज्ञात्वा दिव्येन चक्षुषा ।
आगम्य चाब्रवीद्धीमान्पृथां पृथुललोचनाम् ॥ ००९ ॥

उत्तरां च महातेजाः शोकः संत्यज्यतामयम् ॥ ००९ ॥

जनिष्यति महातेजाः पुत्रस्तव यशस्विनि ।
प्रभावाद्वासुदेवस्य मम व्याहरणादपि ॥ ०१० ॥

पाण्डवानामयं चान्ते पालयिष्यति मेदिनीम् ॥ ०१० ॥

धनञ्जयं च संप्रेक्ष्य धर्मराजस्य पश्यतः ।
व्यासो वाक्यमुवाचेदं हर्षयन्निव भारत ॥ ०११ ॥

पौत्रस्तव महाबाहो जनिष्यति महामनाः ।
पृथ्वीं सागरपर्यन्तां पालयिष्यति चैव ह ॥ ०१२ ॥

तस्माच्छोकं कुरुश्रेष्ठ जहि त्वमरिकर्शन ।
विचार्यमत्र न हि ते सत्यमेतद्भविष्यति ॥ ०१३ ॥

यच्चापि वृष्णिवीरेण कृष्णेन कुरुनन्दन ।
पुरोक्तं तत्तथा भावि मा तेऽत्रास्तु विचारणा ॥ ०१४ ॥

विबुधानां गतो लोकानक्षयानात्मनिर्जितान् ।
न स शोच्यस्त्वया तात न चान्यैः कुरुभिस्तथा ॥ ०१५ ॥

एवं पितामहेनोक्तो धर्मात्मा स धनञ्जयः ।
त्यक्त्वा शोकं महाराज हृष्टरूपोऽभवत्तदा ॥ ०१६ ॥

पितापि तव धर्मज्ञ गर्भे तस्मिन्महामते ।
अवर्धत यथाकालं शुक्लपक्षे यथा शशी ॥ ०१७ ॥

ततः सञ्चोदयामास व्यासो धर्मात्मजं नृपम् ।
अश्वमेधं प्रति तदा ततः सोऽन्तर्हितोऽभवत् ॥ ०१८ ॥

धर्मराजोऽपि मेधावी श्रुत्वा व्यासस्य तद्वचः ।
वित्तोपनयने तात चकार गमने मतिम् ॥ ०१९ ॥

---

# पाण्डवानाम् मरुत्तनिधिलाभः

## अध्याय ०६२

जनमेजय उवाच ॥

श्रुत्वैतद्वचनं ब्रह्मन्व्यासेनोक्तं महात्मना ।
अश्वमेधं प्रति तदा किं नृपः प्रचकार ह ॥ ००१ ॥

रत्नं च यन्मरुत्तेन निहितं पृथिवीतले ।
तदवाप कथं चेति तन्मे ब्रूहि द्विजोत्तम ॥ ००२ ॥

वैशंपायन उवाच ॥

श्रुत्वा द्वैपायनवचो धर्मराजो युधिष्ठिरः ।
भ्रातॄन्सर्वान्समानाय्य काले वचनमब्रवीत् ॥ ००३ ॥

अर्जुनं भीमसेनं च माद्रीपुत्रौ यमावपि ॥ ००३ ॥

श्रुतं वो वचनं वीराः सौहृदाद्यन्महात्मना ।
कुरूणां हितकामेन प्रोक्तं कृष्णेन धीमता ॥ ००४ ॥

तपोवृद्धेन महता सुहृदां भूतिमिच्छता ।
गुरुणा धर्मशीलेन व्यासेनाद्भुतकर्मणा ॥ ००५ ॥

भीष्मेण च महाप्राज्ञ गोविन्देन च धीमता ।
संस्मृत्य तदहं सम्यक्कर्तुमिच्छामि पाण्डवाः ॥ ००६ ॥

आयत्यां च तदात्वे च सर्वेषां तद्धि नो हितम् ।
अनुबन्धे च कल्याणं यद्वचो ब्रह्मवादिनः ॥ ००७ ॥

इयं हि वसुधा सर्वा क्षीणरत्ना कुरूद्वहाः ।
तच्चाचष्ट बहु व्यासो मरुत्तस्य धनं नृपाः ॥ ००८ ॥

यद्येतद्वो बहुमतं मन्यध्वं वा क्षमं यदि ।
तदानयामहे सर्वे कथं वा भीम मन्यसे ॥ ००९ ॥

इत्युक्तवाक्ये नृपतौ तदा कुरुकुलोद्वह ।
भीमसेनो नृपश्रेष्ठं प्राञ्जलिर्वाक्यमब्रवीत् ॥ ०१० ॥

रोचते मे महाबाहो यदिदं भाषितं त्वया ।
व्यासाख्यातस्य वित्तस्य समुपानयनं प्रति ॥ ०११ ॥

यदि तत्प्राप्नुयामेह धनमाविक्षितं प्रभो ।
कृतमेव महाराज भवेदिति मतिर्मम ॥ ०१२ ॥

ते वयं प्रणिपातेन गिरीशस्य महात्मनः ।
तदानयाम भद्रं ते समभ्यर्च्य कपर्दिनम् ॥ ०१३ ॥

तं विभुं देवदेवेशं तस्यैवानुचरांश्च तान् ।
प्रसाद्यार्थमवाप्स्यामो नूनं वाग्बुद्धिकर्मभिः ॥ ०१४ ॥

रक्षन्ते ये च तद्द्रव्यं किङ्करा रौद्रदर्शनाः ।
ते च वश्या भविष्यन्ति प्रसन्ने वृषभध्वजे ॥ ०१५ ॥

श्रुत्वैवं वदतस्तस्य वाक्यं भीमस्य भारत ।
प्रीतो धर्मात्मजो राजा बभूवातीव भारत ॥ ०१६ ॥

अर्जुनप्रमुखाश्चापि तथेत्येवाब्रुवन्मुदा ॥ ०१६ ॥

कृत्वा तु पाण्डवाः सर्वे रत्नाहरणनिश्चयम् ।
सेनामाज्ञापयामासुर्नक्षत्रेऽहनि च ध्रुवे ॥ ०१७ ॥

ततो ययुः पाण्डुसुता ब्राह्मणान्स्वस्ति वाच्य च ।
अर्चयित्वा सुरश्रेष्ठं पूर्वमेव महेश्वरम् ॥ ०१८ ॥

मोदकैः पायसेनाथ मांसापूपैस्तथैव च ।
आशास्य च महात्मानं प्रययुर्मुदिता भृशम् ॥ ०१९ ॥

तेषां प्रयास्यतां तत्र मङ्गलानि शुभान्यथ ।
प्राहुः प्रहृष्टमनसो द्विजाग्र्या नागराश्च ते ॥ ०२० ॥

ततः प्रदक्षिणीकृत्य शिरोभिः प्रणिपत्य च ।
ब्राह्मणानग्निसहितान्प्रययुः पाण्डुनन्दनाः ॥ ०२१ ॥

समनुज्ञाप्य राजानं पुत्रशोकसमाहतम् ।
धृतराष्ट्रं सभार्यं वै पृथां पृथुललोचनाम्  ॥ ०२२  ॥

मूले निक्षिप्य कौरव्यं युयुत्सुं धृतराष्ट्रजम् ।
संपूज्यमानाः पौरैश्च ब्राह्मणैश्च मनीषिभिः  ॥ ०२३  ॥

---

# अध्याय ०६३

वैशंपायन उवाच  ॥

ततस्ते प्रययुर्हृष्टाः प्रहृष्टनरवाहनाः ।
रथघोषेण महता पूरयन्तो वसुंधराम्  ॥ ००१  ॥

संस्तूयमानाः स्तुतिभिः सूतमागधबन्दिभिः ।
स्वेन सैन्येन संवीता यथादित्याः स्वरश्मिभिः  ॥ ००२  ॥

पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि ।
बभौ युधिष्ठिरस्तत्र पौर्णमास्यामिवोडुराट्  ॥ ००३  ॥

जयाशिषः प्रहृष्टानां नराणां पथि पाण्डवः ।
प्रत्यगृह्णाद्यथान्यायं यथावत्पुरुषर्षभः  ॥ ००४  ॥

तथैव सैनिका राजन्राजानमनुयान्ति ये ।
तेषां हलहलाशब्दो दिवं स्तब्ध्वा व्यतिष्ठत  ॥ ००५  ॥

स सरांसि नदीश्चैव वनान्युपवनानि च ।

अत्यक्रामन्महाराजो गिरिं चैवान्वपद्यत ॥ ००६ ॥

तस्मिन्देशे च राजेन्द्र यत्र तद्द्रव्यमुत्तमम् ।
चक्रे निवेशनं राजा पाण्डवः सह सैनिकैः ॥ ००७ ॥

शिवे देशे समे चैव तदा भरतसत्तम ॥ ००७ ॥

अग्रतो ब्राह्मणान्कृत्वा तपोविद्यादमान्वितान् ।
पुरोहितं च कौरव्य वेदवेदाङ्गपारगम् ॥ ००८ ॥

प्राङ्निवेशात्तु राजानं ब्राह्मणाः सपुरोधसः ।
कृत्वा शान्तिं यथान्यायं सर्वतः पर्यवारयन् ॥ ००९ ॥

कृत्वा च मध्ये राजानममात्यांश्च यथाविधि ।
षट्पथं नवसंस्थानं निवेशं चक्रिरे द्विजाः ॥ ०१० ॥

मत्तानां वारणेन्द्राणां निवेशं च यथाविधि ।
कारयित्वा स राजेन्द्रो ब्राह्मणानिदमब्रवीत् ॥ ०११ ॥

अस्मिन्कार्ये द्विजश्रेष्ठा नक्षत्रे दिवसे शुभे ।
यथा भवन्तो मन्यन्ते कर्तुमर्हथ तत्तथा ॥ ०१२ ॥

न नः कालात्ययो वै स्यादिहैव परिलम्बताम् ।
इति निश्चित्य विप्रेन्द्राः क्रियतां यदनन्तरम् ॥ ०१३ ॥

श्रुत्वैतद्वचनं राज्ञो ब्राह्मणाः सपुरोधसः ।
इदमूचुर्वचो हृष्टा धर्मराजप्रियेप्सवः ॥ ०१४ ॥

अद्यैव नक्षत्रमहश्च पुण्यं ; यतामहे श्रेष्ठतमं क्रियासु ।
अम्भोभिरद्येह वसाम राज ;न्नुपोष्यतां चापि भवद्भिरद्य ॥ ०१५ ॥

श्रुत्वा तु तेषां द्विजसत्तमानां ; कृतोपवासा रजनीं नरेन्द्राः ।
ऊषुः प्रतीताः कुशसंस्तरेषु ; यथाध्वरेषु ज्वलिता हव्यवाहाः ॥ ०१६ ॥

ततो निशा सा व्यगमन्महात्मनां ; संश्रृण्वतां विप्रसमीरिता गिरः ।
ततः प्रभाते विमले द्विजर्षभा ; वचोऽब्रुवन्धर्मसुतं नराधिपम् ॥ ०१७ ॥

---

# अध्याय ०६४

ब्राह्मणा ऊचुः ॥

क्रियतामुपहारोऽद्य त्र्यम्बकस्य महात्मनः ।
कृत्वोपहारं नृपते ततः स्वार्थे यतामहे ॥ ००१ ॥

वैशंपायन उवाच ॥

श्रुत्वा तु वचनं तेषां ब्राह्मणानां युधिष्ठिरः ।
गिरीशस्य यथान्यायमुपहारमुपाहरत् ॥ ००२ ॥

आज्येन तर्पयित्वाग्निं विधिवत्संस्कृतेन ह ।
मन्त्रसिद्धं चरुं कृत्वा पुरोधाः प्रययौ तदा ॥ ००३ ॥

स गृहीत्वा सुमनसो मन्त्रपूता जनाधिप ।
मोदकैः पायसेनाथ मांसैश्चोपाहरद्बलिम् ॥ ००४ ॥

सुमनोभिश्च चित्राभिर्लाजैरुच्चावचैरपि ।
सर्वं स्विष्टकृतं कृत्वा विधिवद्वेदपारगः ॥ ००५ ॥

किङ्कराणां ततः पश्चाच्चकार बलिमुत्तमम् ॥ ००५ ॥

यक्षेन्द्राय कुबेराय मणिभद्राय चैव ह ।
तथान्येषां च यक्षाणां भूताधिपतयश्च ये ॥ ००६ ॥

कृसरेण समांसेन निवापैस्तिलसंयुतैः ।
शुशुभे स्थानमत्यर्थं देवदेवस्य पार्थिव ॥ ००७ ॥

कृत्वा तु पूजां रुद्रस्य गणानां चैव सर्वशः ।
ययौ व्यासं पुरस्कृत्य नृपो रत्ननिधिं प्रति ॥ ००८ ॥

पूजयित्वा धनाध्यक्षं प्रणिपत्याभिवाद्य च ।
सुमनोभिर्विचित्राभिरपूपैः कृसरेण च ॥ ००९ ॥

शङ्खादींश्च निधीन्सर्वान्निधिपालांश्च सर्वशः ।
अर्चयित्वा द्विजाग्र्यान्स स्वस्ति वाच्य च वीर्यवान् ॥ ०१० ॥

तेषां पुण्याहघोषेण तेजसा समवस्थितः ।
प्रीतिमान्स कुरुश्रेष्ठः खानयामास तं निधिम् ॥ ०११ ॥

ततः पात्र्यः सकरकाः साश्मन्तकमनोरमाः ।
भृङ्गाराणि कटाहानि कलशान्वर्धमानकान् ॥ ०१२ ॥

बहूनि च विचित्राणि भाजनानि सहस्रशः ।
उद्धारयामास तदा धर्मराजो युधिष्ठिरः ॥ ०१३ ॥

तेषां लक्षणमप्यासीन्महान्करपुटस्तथा ।
त्रिलक्षं भाजनं राजंस्तुलार्धमभवन्नृप ॥ ०१४ ॥

वाहनं पाण्डुपुत्रस्य तत्रासीत्तु विशां पते ।
षष्टिरुष्ट्रसहस्राणि शतानि द्विगुणा हयाः ॥ ०१५ ॥

वारणाश्च महाराज सहस्त्रशतसंमिताः ।
शकटानि रथाश्चैव तावदेव करेणवः ॥ ०१६ ॥

खराणां पुरुषाणां च परिसंख्या न विद्यते ॥ ०१६ ॥

एतद्वित्तं तदभवद्यदुद्दध्रे युधिष्ठिरः ।
षोडशाष्टौ चतुर्विंशत्सहस्त्रं भारलक्षणम् ॥ ०१७ ॥

एतेष्वाधाय तद्द्रव्यं पुनरभ्यर्च्य पाण्डवः ।
महादेवं प्रति ययौ पुरं नागाह्वयं प्रति ॥ ०१८ ॥

द्वैपायनाभ्यनुज्ञातः पुरस्कृत्य पुरोहितम् ।
गोयुते गोयुते चैव न्यवसत्पुरुषर्षभः ॥ ०१९ ॥

सा पुराभिमुखी राजञ्जगाम महती चमूः ।
कृच्छ्राद्द्रविणभारार्ता हर्षयन्ती कुरूद्वहान् ॥ ०२० ॥

---

# परिक्शित्संजीवनम्

## अध्याय ०६५

वैशंपायन उवाच ॥

एतस्मिन्नेव काले तु वासुदेवोऽपि वीर्यवान् ।
उपायाद्वृष्णिभिः सार्धं पुरं वारणसाह्वयम् ॥ ००१ ॥

समयं वाजिमेधस्य विदित्वा पुरुषर्षभः ।

यथोक्तो धर्मपुत्रेण व्रजन्स स्वपुरीं प्रति ॥ ००२ ॥

रौक्मिणेयेन सहितो युयुधानेन चैव ह ।
चारुदेष्णेन साम्बेन गदेन कृतवर्मणा ॥ ००३ ॥

सारणेन च वीरेण निशठेनोल्मुकेन च ।
बलदेवं पुरस्कृत्य सुभद्रासहितस्तदा ॥ ००४ ॥

द्रौपदीमुत्तरां चैव पृथां चाप्यवलोककः ।
समाश्वासयितुं चापि क्षत्रिया निहतेश्वराः ॥ ००५ ॥

तानागतान्समीक्ष्यैव धृतराष्ट्रो महीपतिः ।
प्रत्यगृह्णाद्यथान्यायं विदुरश्च महामनाः ॥ ००६ ॥

तत्रैव न्यवसत्कृष्णः स्वर्चितः पुरुषर्षभः ।
विदुरेण महातेजास्तथैव च युयुत्सुना ॥ ००७ ॥

वसत्सु वृष्णिवीरेषु तत्राथ जनमेजय ।
जज्ञे तव पिता राजन्परिक्षित्परवीरहा ॥ ००८ ॥

स तु राजा महाराज ब्रह्मास्त्रेणाभिपीडितः ।
शवो बभूव निश्चेष्टो हर्षशोकविवर्धनः ॥ ००९ ॥

हृष्टानां सिंहनादेन जनानां तत्र निस्वनः ।
आविश्य प्रदिशः सर्वाः पुनरेव व्युपारमत् ॥ ०१० ॥

ततः सोऽतित्वरः कृष्णो विवेशान्तःपुरं तदा ।
युयुधानद्वितीयो वै व्यथितेन्द्रियमानसः ॥ ०११ ॥

ततस्त्वरितमायान्तीं ददर्श स्वां पितृष्वसाम् ।
क्रोशन्तीमभिधावेति वासुदेवं पुनः पुनः ॥ ०१२ ॥

पृष्ठतो द्रौपदीं चैव सुभद्रां च यशस्विनीम् ।
सविक्रोशं सकरुणं बान्धवानां स्त्रियो नृप ॥ ०१३ ॥

ततः कृष्णं समासाद्य कुन्ती राजसुता तदा ।
प्रोवाच राजशार्दूल बाष्पगद्गदया गिरा ॥ ०१४ ॥

वासुदेव महाबाहो सुप्रजा देवकी त्वया ।
त्वं नो गतिः प्रतिष्ठा च त्वदायत्तमिदं कुलम् ॥ ०१५ ॥

यदुप्रवीर योऽयं ते स्वस्रीयस्यात्मजः प्रभो ।
अश्वत्थाम्ना हतो जातस्तमुज्जीवय केशव ॥ ०१६ ॥

त्वया ह्येतत्प्रतिज्ञातमैषीके यदुनन्दन ।
अहं सञ्जीवयिष्यामि मृतं जातमिति प्रभो ॥ ०१७ ॥

सोऽयं जातो मृतस्तात पश्यैनं पुरुषर्षभ ।
उत्तरां च सुभद्रां च द्रौपदीं मां च माधव ॥ ०१८ ॥

धर्मपुत्रं च भीमं च फल्गुनं नकुलं तथा ।
सहदेवं च दुर्धर्ष सर्वान्नस्त्रातुमर्हसि ॥ ०१९ ॥

अस्मिन्प्राणाः समायत्ताः पाण्डवानां ममैव च ।
पाण्डोश्च पिण्डो दाशार्ह तथैव श्वशुरस्य मे ॥ ०२० ॥

अभिमन्योश्च भद्रं ते प्रियस्य सदृशस्य च ।
प्रियमुत्पादयाद्य त्वं प्रेतस्यापि जनार्दन ॥ ०२१ ॥

उत्तरा हि प्रियोक्तं वै कथयत्यरिसूदन ।
अभिमन्योर्वचः कृष्ण प्रियत्वात्ते न संशयः ॥ ०२२ ॥

अब्रवीत्किल दाशार्ह वैराटीमार्जुनिः पुरा ।
मातुलस्य कुलं भद्रे तव पुत्रो गमिष्यति ॥ ०२३ ॥

गत्वा वृष्ण्यन्धककुलं धनुर्वेदं ग्रहीष्यति ।
अस्त्राणि च विचित्राणि नीतिशास्त्रं च केवलम् ॥ ०२४ ॥

इत्येतत्प्रणयात्तात सौभद्रः परवीरहा ।
कथयामास दुर्धर्षस्तथा चैतन्न संशयः ॥ ०२५ ॥

तास्त्वां वयं प्रणम्येह याचामो मधुसूदन ।
कुलस्यास्य हितार्थं त्वं कुरु कल्याणमुत्तमम् ॥ ०२६ ॥

एवमुक्त्वा तु वार्ष्णेयं पृथा पृथुललोचना ।
उच्छ्रित्य बाहू दुःखार्ता ताश्चान्याः प्रापतन्भुवि ॥ ०२७ ॥

अब्रुवंश्च महाराज सर्वाः सास्राविलेक्षणाः ।
स्वस्रीयो वासुदेवस्य मृतो जात इति प्रभो ॥ ०२८ ॥

एवमुक्ते ततः कुन्तीं प्रत्यगृह्णाज्जनार्दनः ।
भूमौ निपतितां चैनां सान्त्वयामास भारत ॥ ०२९ ॥

---

# अध्याय ०६६

वैशंपायन उवाच ॥

उत्थितायां पृथायां तु सुभद्रा भ्रातरं तदा ।
दृष्ट्वा चुक्रोश दुःखार्ता वचनं चेदमब्रवीत् ॥ ००१ ॥

पुण्डरीकाक्ष पश्यस्व पौत्रं पार्थस्य धीमतः ।
परिक्षीणेषु कुरुषु परिक्षीणं गतायुषम्  ॥ ००२  ॥

इषीका द्रोणपुत्रेण भीमसेनार्थमुद्यता ।
सोत्तरायां निपतिता विजये मयि चैव ह  ॥ ००३  ॥

सेयं ज्वलन्ती हृदये मयि तिष्ठति केशव ।
यन्न पश्यामि दुर्धर्ष मम पुत्रसुतं विभो  ॥ ००४  ॥

किं नु वक्ष्यति धर्मात्मा धर्मराजो युधिष्ठिरः ।
भीमसेनार्जुनौ चापि माद्रवत्याः सुतौ च तौ  ॥ ००५  ॥

श्रुत्वाभिमन्योस्तनयं जातं च मृतमेव च ।
मुषिता इव वार्ष्णेय द्रोणपुत्रेण पाण्डवाः  ॥ ००६  ॥

अभिमन्युः प्रियः कृष्ण पितृणां नात्र संशयः ।
ते श्रुत्वा किं नु वक्ष्यन्ति द्रोणपुत्रास्त्रनिर्जिताः  ॥ ००७  ॥

भवितातः परं दुःखं किं नु मन्ये जनार्दन ।
अभिमन्योः सुतात्कृष्ण मृताज्जातादरिंदम  ॥ ००८  ॥

साहं प्रसादये कृष्ण त्वामद्य शिरसा नता ।
पृथेयं द्रौपदी चैव ताः पश्य पुरुषोत्तम  ॥ ००९  ॥

यदा द्रोणसुतो गर्भान्पाण्डूनां हन्ति माधव ।
तदा किल त्वया द्रौणिः क्रुद्धेनोक्तोऽरिमर्दन  ॥ ०१०  ॥

अकामं त्वा करिष्यामि ब्रह्मबन्धो नराधम ।
अहं सञ्जीवयिष्यामि किरीटितनयात्मजम्  ॥ ०११  ॥

इत्येतद्वचनं श्रुत्वा जानमाना बलं तव ।
प्रसादये त्वा दुर्धर्ष जीवतामभिमन्युजः ॥ ०१२ ॥

यद्येवं त्वं प्रतिश्रुत्य न करोषि वचः शुभम् ।
सफलं वृष्णिशार्दूल मृतां मामुपधारय ॥ ०१३ ॥

अभिमन्योः सुतो वीर न सञ्जीवति यद्ययम् ।
जीवति त्वयि दुर्धर्ष किं करिष्याम्यहं त्वया ॥ ०१४ ॥

सञ्जीवयैनं दुर्धर्ष मृतं त्वमभिमन्युजम् ।
सदृशाक्षसुतं वीर सस्यं वर्षन्निवाम्बुदः ॥ ०१५ ॥

त्वं हि केशव धर्मात्मा सत्यवान्सत्यविक्रमः ।
स तां वाचमृतां कर्तुमर्हसि त्वमरिंदम ॥ ०१६ ॥

इच्छन्नपि हि लोकांस्त्रीञ्जीवयेथा मृतानिमान् ।
किं पुनर्दयितं जातं स्वस्त्रीयस्यात्मजं मृतम् ॥ ०१७ ॥

प्रभावज्ञास्मि ते कृष्ण तस्मादेतद्ब्रवीमि ते ।
कुरुष्व पाण्डुपुत्राणामिमं परमनुग्रहम् ॥ ०१८ ॥

स्वसेति वा महाबाहो हतपुत्रेति वा पुनः ।
प्रपन्ना मामियं वेति दयां कर्तुमिहार्हसि ॥ ०१९ ॥

---

# अध्याय ०६७

वैशंपायन उवाच ॥

एवमुक्तस्तु राजेन्द्र केशिहा दुःखमूर्छितः ।
तथेति व्याजहारोच्चैर्ह्लादयन्निव तं जनम् ॥ ००१ ॥

वाक्येन तेन हि तदा तं जनं पुरुषर्षभः ।
ह्लादयामास स विभुर्घर्मार्तं सलिलैरिव ॥ ००२ ॥

ततः स प्राविशत्तूर्णं जन्मवेश्म पितुस्तव ।
अर्चितं पुरुषव्याघ्र सितैर्माल्यैर्यथाविधि ॥ ००३ ॥

अपां कुम्भैः सुपूर्णैश्च विन्यस्तैः सर्वतोदिशम् ।
घृतेन तिन्दुकालातैः सर्षपैश्च महाभुज ॥ ००४ ॥

शस्त्रैश्च विमलैर्न्यस्तैः पावकैश्च समन्ततः ।
वृद्धाभिश्चाभिरामाभिः परिचारार्थमच्युतः ॥ ००५ ॥

दक्षैश्च परितो वीर भिषग्भिः कुशलैस्तथा ।
ददर्श च स तेजस्वी रक्षोघ्नान्यपि सर्वशः ॥ ००६ ॥

द्रव्याणि स्थापितानि स्म विधिवत्कुशलैर्जनैः ॥ ००६ ॥

तथायुक्तं च तद्दृष्ट्वा जन्मवेश्म पितुस्तव ।
हृष्टोऽभवद्धृषीकेशः साधु साध्विति चाब्रवीत् ॥ ००७ ॥

तथा ब्रुवति वार्ष्णेये प्रहृष्टवदने तदा ।
द्रौपदी त्वरिता गत्वा वैराटीं वाक्यमब्रवीत् ॥ ००८ ॥

अयमायाति ते भद्रे श्वशुरो मधुसूदनः ।
पुराणर्षिरचिन्त्यात्मा समीपमपराजितः ॥ ००९ ॥

सापि बाष्पकलां वाचं निगृह्याश्रूणि चैव ह ।

सुसंवीताभवद्देवी देववत्कृष्णमीक्षती ॥ ०१० ॥

सा तथा दूयमानेन हृदयेन तपस्विनी ।
दृष्ट्वा गोविन्दमायान्तं कृपणं पर्यदेवयत् ॥ ०११ ॥

पुण्डरीकाक्ष पश्यस्व बालाविह विनाकृतौ ।
अभिमन्युं च मां चैव हतौ तुल्यं जनार्दन ॥ ०१२ ॥

वार्ष्णेय मधुहन्वीर शिरसा त्वां प्रसादये ।
द्रोणपुत्रास्त्रनिर्दग्धं जीवयैनं ममात्मजम् ॥ ०१३ ॥

यदि स्म धर्मराज्ञा वा भीमसेनेन वा पुनः ।
त्वया वा पुण्डरीकाक्ष वाक्यमुक्तमिदं भवेत् ॥ ०१४ ॥

अजानतीमिषीकेयं जनित्रीं हन्त्विति प्रभो ।
अहमेव विनष्टा स्यां नेदमेवङ्गतं भवेत् ॥ ०१५ ॥

गर्भस्थस्यास्य बालस्य ब्रह्मास्त्रेण निपातनम् ।
कृत्वा नृशंसं दुर्बुद्धिर्द्रौणिः किं फलमश्नुते ॥ ०१६ ॥

सा त्वा प्रसाद्य शिरसा याचे शत्रुनिबर्हण ।
प्राणांस्त्यक्ष्यामि गोविन्द नायं सञ्जीवते यदि ॥ ०१७ ॥

अस्मिन्हि बहवः साधो ये ममासन्मनोरथाः ।
ते द्रोणपुत्रेण हताः किं नु जीवामि केशव ॥ ०१८ ॥

आसीन्मम मतिः कृष्ण पूर्णोत्सङ्गा जनार्दन ।
अभिवादयिष्ये दिष्ट्येति तदिदं वितथीकृतम् ॥ ०१९ ॥

चपलाक्षस्य दायादे मृतेऽस्मिन्पुरुषर्षभ ।
विफला मे कृताः कृष्ण हृदि सर्वे मनोरथाः ॥ ०२० ॥

चपलाक्षः किलातीव प्रियस्ते मधुसूदन ।
सुतं पश्यस्व तस्येमं ब्रह्मास्त्रेण निपातितम् ॥ ०२१ ॥

कृतघ्नोऽयं नृशंसोऽयं यथास्य जनकस्तथा ।
यः पाण्डवीं श्रियं त्यक्त्वा गतोऽद्य यमसादनम् ॥ ०२२ ॥

मया चैतत्प्रतिज्ञातं रणमूर्धनि केशव ।
अभिमन्यौ हते वीर त्वामेष्याम्यचिरादिति ॥ ०२३ ॥

तच्च नाकरवं कृष्ण नृशंसा जीवितप्रिया ।
इदानीमागतां तत्र किं नु वक्ष्यति फाल्गुनिः ॥ ०२४ ॥

---

# अध्याय ०६८

वैशंपायन उवाच ॥

सैवं विलप्य करुणं सोन्मादेव तपस्विनी ।
उत्तरा न्यपतद्भूमौ कृपणा पुत्रगृद्धिनी ॥ ००१ ॥

तां तु दृष्ट्वा निपतितां हतबन्धुपरिच्छदाम् ।
चुक्रोश कुन्ती दुःखार्ता सर्वाश्च भरतस्त्रियः ॥ ००२ ॥

मुहूर्तमिव तद्राजन्पाण्डवानां निवेशनम् ।
अप्रेक्षणीयमभवदार्तस्वरनिनादितम् ॥ ००३ ॥

सा मुहूर्तं च राजेन्द्र पुत्रशोकाभिपीडिता ।
कश्मलाभिहता वीर वैराटी त्वभवत्तदा ॥ ००४ ॥

प्रतिलभ्य तु सा सञ्ज्ञामुत्तरा भरतर्षभ ।
अङ्कमारोप्य तं पुत्रमिदं वचनमब्रवीत् ॥ ००५ ॥

धर्मज्ञस्य सुतः संस्त्वमधर्ममवबुध्यसे ।
यस्त्वं वृष्णिप्रवीरस्य कुरुषे नाभिवादनम् ॥ ००६ ॥

पुत्र गत्वा मम वचो ब्रूयास्त्वं पितरं तव ।
दुर्मरं प्राणिनां वीर काले प्राप्ते कथञ्चन ॥ ००७ ॥

याहं त्वया विहीनाद्य पत्या पुत्रेण चैव ह ।
मर्तव्ये सति जीवामि हतस्वस्तिरकिञ्चना ॥ ००८ ॥

अथ वा धर्मराज्ञाहमनुज्ञाता महाभुज ।
भक्षयिष्ये विषं तीक्ष्णं प्रवेक्ष्ये वा हुताशनम् ॥ ००९ ॥

अथ वा दुर्मरं तात यदिदं मे सहस्रधा ।
पतिपुत्रविहीनाया हृदयं न विदीर्यते ॥ ०१० ॥

उत्तिष्ठ पुत्र पश्येमां दुःखितां प्रपितामहीम् ।
आर्तामुपप्लुतां दीनां निमग्नां शोकसागरे ॥ ०११ ॥

आर्यां च पश्य पाञ्चालीं सात्वतीं च तपस्विनीम् ।
मां च पश्य सुदुःखार्तां व्याधविद्धां मृगीमिव ॥ ०१२ ॥

उत्तिष्ठ पश्य वदनं लोकनाथस्य धीमतः ।
पुण्डरीकपलाशाक्षं पुरेव चपलेक्षणम् ॥ ०१३ ॥

एवं विप्रलपन्तीं तु दृष्ट्वा निपतितां पुनः ।
उत्तरां ताः स्त्रियः सर्वाः पुनरुत्थापयन्त्युत ॥ ०१४ ॥

उत्थाय तु पुनर्धैर्यात्तदा मत्स्यपतेः सुता ।
प्राञ्जलिः पुण्डरीकाक्षं भूमावेवाभ्यवादयत् ॥ ०१५ ॥

श्रुत्वा स तस्या विपुलं विलापं पुरुषर्षभः ।
उपस्पृश्य ततः कृष्णो ब्रह्मास्त्रं सञ्जहार तत् ॥ ०१६ ॥

प्रतिजज्ञे च दाशार्हस्तस्य जीवितमच्युतः ।
अब्रवीच्च विशुद्धात्मा सर्वं विश्रावयञ्जगत् ॥ ०१७ ॥

न ब्रवीम्युत्तरे मिथ्या सत्यमेतद्भविष्यति ।
एष सञ्जीवयाम्येनं पश्यतां सर्वदेहिनाम् ॥ ०१८ ॥

नोक्तपूर्वं मया मिथ्या स्वैरेष्वपि कदाचन ।
न च युद्धे परावृत्तस्तथा सञ्जीवतामयम् ॥ ०१९ ॥

यथा मे दयितो धर्मो ब्राह्मणाश्च विशेषतः ।
अभिमन्योः सुतो जातो मृतो जीवत्वयं तथा ॥ ०२० ॥

यथाहं नाभिजानामि विजयेन कदाचन ।
विरोधं तेन सत्येन मृतो जीवत्वयं शिशुः ॥ ०२१ ॥

यथा सत्यं च धर्मश्च मयि नित्यं प्रतिष्ठितौ ।
तथा मृतः शिशुरयं जीवतामभिमन्युजः ॥ ०२२ ॥

यथा कंसश्च केशी च धर्मेण निहतौ मया ।
तेन सत्येन बालोऽयं पुनरुज्जीवतामिह ॥ ०२३ ॥

इत्युक्तो वासुदेवेन स बालो भरतर्षभ ।
शनैः शनैर्महाराज प्रास्पन्दत सचेतनः ॥ ०२४ ॥

# अध्याय ०६९

वैशंपायन उवाच ॥

ब्रह्मास्त्रं तु यदा राजन्कृष्णेन प्रतिसंहृतम् ।
तदा तद्वेश्म ते पित्रा तेजसाभिविदीपितम् ॥ ००१ ॥

ततो रक्षांसि सर्वाणि नेशुस्त्यक्त्वा गृहं तु तत् ।
अन्तरिक्षे च वागासीत्साधु केशव साध्विति ॥ ००२ ॥

तदस्त्रं ज्वलितं चापि पितामहमगात्तदा ।
ततः प्राणान्पुनर्लेभे पिता तव जनेश्वर ॥ ००३ ॥

व्यचेष्टत च बालोऽसौ यथोत्साहं यथाबलम् ॥ ००३ ॥

बभूवुर्मुदिता राजंस्ततस्ता भरतस्त्रियः ।
ब्राह्मणान्वाचयामासुर्गोविन्दस्य च शासनात् ॥ ००४ ॥

ततस्ता मुदिताः सर्वाः प्रशशंसुर्जनार्दनम् ।
स्त्रियो भरतसिंहानां नावं लब्ध्वेव पारगाः ॥ ००५ ॥

कुन्ती द्रुपदपुत्री च सुभद्रा चोत्तरा तथा ।
स्त्रियश्चान्या नृसिंहानां बभूवुर्हृष्टमानसाः ॥ ००६ ॥

तत्र मल्ला नटा झल्ला ग्रन्थिकाः सौखशायिकाः ।
सूतमागधसंघाश्चाप्यस्तुवन्वै जनार्दनम् ॥ ००७ ॥

कुरुवंशस्तवाख्याभिराशीर्भिर्भरतर्षभ ॥ ००७ ॥

उत्थाय तु यथाकालमुत्तरा यदुनन्दनम् ।
अभ्यवादयत प्रीता सह पुत्रेण भारत ॥ ००८ ॥

ततस्तस्यै ददौ प्रीतो बहुरत्नं विशेषतः ॥ ००८ ॥

तथान्ये वृष्णिशार्दूला नाम चास्याकरोत्प्रभुः ।
पितुस्तव महाराज सत्यसंधो जनार्दनः ॥ ००९ ॥

परिक्षीणे कुले यस्माज्जातोऽयमभिमन्युजः ।
परिक्षिदिति नामास्य भवत्वित्यब्रवीत्तदा ॥ ०१० ॥

सोऽवर्धत यथाकालं पिता तव नराधिप ।
मनःप्रह्लादनश्चासीत्सर्वलोकस्य भारत ॥ ०११ ॥

मासजातस्तु ते वीर पिता भवति भारत ।
अथाजग्मुः सुबहुलं रत्नमादाय पाण्डवाः ॥ ०१२ ॥

तान्समीपगताञ्श्रुत्वा निर्ययुर्वृष्णिपुङ्गवाः ।
अलञ्चक्रुश्च माल्यौघैः पुरुषा नागसाह्वयम् ॥ ०१३ ॥

पताकाभिर्विचित्राभिर्ध्वजैश्च विविधैरपि ।
वेश्मानि समलञ्चक्रुः पौराश्चापि जनाधिप ॥ ०१४ ॥

देवतायतनानां च पूजा बहुविधास्तथा ।
संदिदेशाथ विदुरः पाण्डुपुत्रप्रियेप्सया ॥ ०१५ ॥

राजमार्गाश्च तत्रासन्सुमनोभिरलङ्कृताः ।
शुशुभे तत्पुरं चापि समुद्रौघनिभस्वनम् ॥ ०१६ ॥

नर्तकैश्चापि नृत्यद्भिर्गायनानां च निस्वनैः ।
आसीद्वैश्रवणस्येव निवासस्तत्पुरं तदा ॥ ०१७ ॥

बन्दिभिश्च नरै राजन्स्त्रीसहायैः सहस्रशः ।
तत्र तत्र विविक्तेषु समन्तादुपशोभितम् ॥ ०१८ ॥

पताका धूयमानाश्च श्वसता मातरिश्वना ।
अदर्शयन्निव तदा कुरून्वै दक्षिणोत्तरान् ॥ ०१९ ॥

अघोषयत्तदा चापि पुरुषो राजधूर्गतः ।
सर्वरात्रिविहारोऽद्य रत्नाभरणलक्षणः ॥ ०२० ॥

---

# युधिष्ठिरस्य यज्ञदीक्षा

## अध्याय ०७०

वैशंपायन उवाच ॥

तान्समीपगताञ्श्रुत्वा पाण्डवाञ्शत्रुकर्शनः ।
वासुदेवः सहामात्यः प्रत्युद्यातो दिदृक्षया ॥ ००१ ॥

ते समेत्य यथान्यायं पाण्डवा वृष्णिभिः सह ।
विविशुः सहिता राजन्पुरं वारणसाह्वयम् ॥ ००२ ॥

महतस्तस्य सैन्यस्य खुरनेमिस्वनेन च ।
द्यावापृथिव्यौ खं चैव शब्देनासीत्समावृतम् ॥ ००३ ॥

ते कोशमग्रतः कृत्वा विविशुः स्वपुरं तदा ।
पाण्डवाः प्रीतमनसः सामात्याः ससुहृद्गणाः ॥ ००४ ॥

ते समेत्य यथान्यायं धृतराष्ट्रं जनाधिपम् ।
कीर्तयन्तः स्वनामानि तस्य पादौ ववन्दिरे ॥ ००५ ॥

धृतराष्ट्रादनु च ते गान्धारीं सुबलात्मजाम् ।
कुन्तीं च राजशार्दूल तदा भरतसत्तमाः ॥ ००६ ॥

विदुरं पूजयित्वा च वैश्यापुत्रं समेत्य च ।
पूज्यमानाः स्म ते वीरा व्यराजन्त विशां पते ॥ ००७ ॥

ततस्तत्परमाश्चर्यं विचित्रं महदद्भुतम् ।
शुश्रुवुस्ते तदा वीराः पितुस्ते जन्म भारत ॥ ००८ ॥

तदुपश्रुत्य ते कर्म वासुदेवस्य धीमतः ।
पूजार्हं पूजयामासुः कृष्णं देवकिनन्दनम् ॥ ००९ ॥

ततः कतिपयाहस्य व्यासः सत्यवतीसुतः ।
आजगाम महातेजा नगरं नागसाह्वयम् ॥ ०१० ॥

तस्य सर्वे यथान्यायं पूजां चक्रुः कुरूद्वहाः ।
सह वृष्ण्यन्धकव्याघ्रैरुपासां चक्रिरे तदा ॥ ०११ ॥

तत्र नानाविधाकाराः कथाः समनुकीर्त्य वै ।
युधिष्ठिरो धर्मसुतो व्यासं वचनमब्रवीत् ॥ ०१२ ॥

भवत्प्रसादाद्भगवन्यदिदं रत्नमाहृतम् ।
उपयोक्तुं तदिच्छामि वाजिमेधे महाक्रतौ ॥ ०१३ ॥

तदनुज्ञातुमिच्छामि भवता मुनिसत्तम ।
त्वदधीना वयं सर्वे कृष्णस्य च महात्मनः ॥ ०१४ ॥

व्यास उवाच ॥

अनुजानामि राजंस्त्वां क्रियतां यदनन्तरम् ।
यजस्व वाजिमेधेन विधिवद्दक्षिणावता ॥ ०१५ ॥

अश्वमेधो हि राजेन्द्र पावनः सर्वपाप्मनाम् ।
तेनेष्ट्वा त्वं विपाप्मा वै भविता नात्र संशयः ॥ ०१६ ॥

वैशंपायन उवाच ॥

इत्युक्तः स तु धर्मात्मा कुरुराजो युधिष्ठिरः ।
अश्वमेधस्य कौरव्य चकाराहरणे मतिम् ॥ ०१७ ॥

समनुज्ञाप्य तु स तं कृष्णद्वैपायनं नृपः ।
वासुदेवमथामन्त्र्य वाग्मी वचनमब्रवीत् ॥ ०१८ ॥

देवकी सुप्रजा देवी त्वया पुरुषसत्तम ।
यद्ब्रूयां त्वां महाबाहो तत्कृथास्त्वमिहाच्युत ॥ ०१९ ॥

त्वत्प्रभावार्जितान्भोगानश्नीम यदुनन्दन ।
पराक्रमेण बुद्ध्या च त्वयेयं निर्जिता मही ॥ ०२० ॥

दीक्षयस्व त्वमात्मानं त्वं नः परमको गुरुः ।
त्वयीष्टवति धर्मज्ञ विपाप्मा स्यामहं विभो ॥ ०२१ ॥

त्वं हि यज्ञोऽक्षरः सर्वस्त्वं धर्मस्त्वं प्रजापतिः ॥ ०२१ ॥

वासुदेव उवाच ॥

त्वमेवैतन्महाबाहो वक्तुमर्हस्यरिंदम ।
त्वं गतिः सर्वभूतानामिति मे निश्चिता मतिः ॥ ०२२ ॥

त्वं चाद्य कुरुवीराणां धर्मेणाभिविराजसे ।
गुणभूताः स्म ते राजंस्त्वं नो राजन्मतो गुरुः ॥ ०२३ ॥

यजस्व मदनुज्ञातः प्राप्त एव क्रतुर्मया ।
युनक्तु नो भवान्कार्ये यत्र वाञ्छसि भारत ॥ ०२४ ॥

सत्यं ते प्रतिजानामि सर्वं कर्तास्मि तेऽनघ ॥ ०२४ ॥

भीमसेनार्जुनौ चैव तथा माद्रवतीसुतौ ।
इष्टवन्तो भविष्यन्ति त्वयीष्टवति भारत ॥ ०२५ ॥

---

# अध्याय ०७१

वैशंपायन उवाच ॥

एवमुक्तस्तु कृष्णेन धर्मपुत्रो युधिष्ठिरः ।
व्यासमामन्त्र्य मेधावी ततो वचनमब्रवीत् ॥ ००१ ॥

यथा कालं भवान्वेत्ति हयमेधस्य तत्त्वतः ।
दीक्षयस्व तदा मा त्वं त्वय्यायत्तो हि मे क्रतुः ॥ ००२ ॥

व्यास उवाच ॥

अहं पैलोऽथ कौन्तेय याज्ञवल्क्यस्तथैव च ।
विधानं यद्यथाकालं तत्कर्तारो न संशयः ॥ ००३ ॥

चैत्र्यां हि पौर्णमास्यां च तव दीक्षा भविष्यति ।

संभाराः संभ्रियन्तां ते यज्ञार्थं पुरुषर्षभ ॥ ००४ ॥

अश्वविद्याविदश्चैव सूता विप्राश्च तद्विदः ।
मेध्यमश्वं परीक्षन्तां तव यज्ञार्थसिद्धये ॥ ००५ ॥

तमुत्सृज्य यथाशास्त्रं पृथिवीं सागराम्बराम् ।
स पर्येतु यशो नाम्ना तव पार्थिव वर्धयन् ॥ ००६ ॥

वैशंपायन उवाच ॥

इत्युक्तः स तथेत्युक्त्वा पाण्डवः पृथिवीपतिः ।
चकार सर्वं राजेन्द्र यथोक्तं ब्रह्मवादिना ॥ ००७ ॥

संभाराश्चैव राजेन्द्र सर्वे सङ्कल्पिताभवन् ॥ ००७ ॥

स संभारान्समाहृत्य नृपो धर्मात्मजस्तदा ।
न्यवेदयदमेयात्मा कृष्णद्वैपायनाय वै ॥ ००८ ॥

ततोऽब्रवीन्महातेजा व्यासो धर्मात्मजं नृपम् ।
यथाकालं यथायोगं सज्जाः स्म तव दीक्षणे ॥ ००९ ॥

स्फ्यश्च कूर्चश्च सौवर्णो यच्चान्यदपि कौरव ।
तत्र योग्यं भवेत्किञ्चित्तद्रौक्मं क्रियतामिति ॥ ०१० ॥

अश्वश्चोत्सृज्यतामद्य पृथ्व्यामथ यथाक्रमम् ।
सुगुप्तश्च चरत्वेष यथाशास्त्रं युधिष्ठिर ॥ ०११ ॥

युधिष्ठिर उवाच ॥

अयमश्वो मया ब्रह्मन्नुत्सृष्टः पृथिवीमिमाम् ।
चरिष्यति यथाकामं तत्र वै संविधीयताम् ॥ ०१२ ॥

पृथिवीं पर्यटन्तं हि तुरगं कामचारिणम् ।
कः पालयेदिति मुने तद्भवान्वक्तुमर्हति ॥ ०१३ ॥

वैशंपायन उवाच ॥

इत्युक्तः स तु राजेन्द्र कृष्णद्वैपायनोऽब्रवीत् ।
भीमसेनादवरजः श्रेष्ठः सर्वधनुष्मताम् ॥ ०१४ ॥

जिष्णुः सहिष्णुर्धृष्णुश्च स एनं पालयिष्यति ।
शक्तः स हि महीं जेतुं निवातकवचान्तकः ॥ ०१५ ॥

तस्मिन्ह्यस्त्राणि दिव्यानि दिव्यं संहननं तथा ।
दिव्यं धनुश्चेषुधी च स एनमनुयास्यति ॥ ०१६ ॥

स हि धर्मार्थकुशलः सर्वविद्याविशारदः ।
यथाशास्त्रं नृपश्रेष्ठ चारयिष्यति ते हयम् ॥ ०१७ ॥

राजपुत्रो महाबाहुः श्यामो राजीवलोचनः ।
अभिमन्योः पिता वीरः स एनमनुयास्यति ॥ ०१८ ॥

भीमसेनोऽपि तेजस्वी कौन्तेयोऽमितविक्रमः ।
समर्थो रक्षितुं राष्ट्रं नकुलश्च विशां पते ॥ ०१९ ॥

सहदेवस्तु कौरव्य समाधास्यति बुद्धिमान् ।
कुटुम्बतन्त्रं विधिवत्सर्वमेव महायशाः ॥ ०२० ॥

तत्तु सर्वं यथान्यायमुक्तं कुरुकुलोद्वहः ।
चकार फल्गुनं चापि संदिदेश हयं प्रति ॥ ०२१ ॥

युधिष्ठिर उवाच ॥

एह्यर्जुन त्वया वीर हयोऽयं परिपाल्यताम् ।
त्वमर्हो रक्षितुं ह्येनं नान्यः कश्चन मानवः ॥ ०२२ ॥

ये चापि त्वां महाबाहो प्रत्युदीयुर्नराधिपाः ।
तैर्विग्रहो यथा न स्यात्तथा कार्यं त्वयानघ ॥ ०२३ ॥

आख्यातव्यश्च भवता यज्ञोऽयं मम सर्वशः ।
पार्थिवेभ्यो महाबाहो समये गम्यतामिति ॥ ०२४ ॥

एवमुक्त्वा स धर्मात्मा भ्रातरं सव्यसाचिनम् ।
भीमं च नकुलं चैव पुरगुप्तौ समादधत् ॥ ०२५ ॥

कुटुम्बतन्त्रे च तथा सहदेवं युधां पतिम् ।
अनुमान्य महीपालं धृतराष्ट्रं युधिष्ठिरः ॥ ०२६ ॥

---

# अर्जुनस्य अश्वानुसरणम्

## अध्याय ०७२

वैशंपायन उवाच ॥

दीक्षाकाले तु संप्राप्ते ततस्ते सुमहर्त्विजः ।
विधिवद्दीक्षयामासुरश्वमेधाय पार्थिवम् ॥ ००१ ॥

कृत्वा स पशुबन्धांश्च दीक्षितः पाण्डुनन्दनः ।
धर्मराजो महातेजाः सहर्त्विग्भिर्व्यरोचत ॥ ००२ ॥

हयश्च हयमेधार्थं स्वयं स ब्रह्मवादिना ।
उत्सृष्टः शास्त्रविधिना व्यासेनामिततेजसा ॥ ००३ ॥

स राजा धर्मजो राजन्दीक्षितो विबभौ तदा ।
हेममाली रुक्मकण्ठः प्रदीप्त इव पावकः ॥ ००४ ॥

कृष्णाजिनी दण्डपाणिः क्षौमवासाः स धर्मजः ।
विबभौ द्युतिमान्भूयः प्रजापतिरिवाध्वरे ॥ ००५ ॥

तथैवास्यर्त्विजः सर्वे तुल्यवेषा विशां पते ।
बभूवुरर्जुनश्चैव प्रदीप्त इव पावकः ॥ ००६ ॥

श्वेताश्वः कृष्णसारं तं ससाराश्वं धनञ्जयः ।
विधिवत्पृथिवीपाल धर्मराजस्य शासनात् ॥ ००७ ॥

विक्षिपन्गाण्डिवं राजन्बद्धगोधाङ्गुलित्रवान् ।
तमश्वं पृथिवीपाल मुदा युक्तः ससार ह ॥ ००८ ॥

आकुमारं तदा राजन्नागमत्तत्पुरं विभो ।
द्रष्टुकामं कुरुश्रेष्ठं प्रयास्यन्तं धनञ्जयम् ॥ ००९ ॥

तेषामन्योन्यसंमर्दादूष्मेव समजायत ।
दिदृक्षूणां हयं तं च तं चैव हयसारिणम् ॥ ०१० ॥

ततः शब्दो महाराज दशाशाः प्रतिपूरयन् ।
बभूव प्रेक्षतां नृणां कुन्तीपुत्रं धनञ्जयम् ॥ ०११ ॥

एष गच्छति कौन्तेयस्तुरगश्चैव दीप्तिमान् ।
यमन्वेति महाबाहुः संस्पृशन्धनुरुत्तमम् ॥ ०१२ ॥

एवं शुश्राव वदतां गिरो जिष्णुरुदारधीः ।
स्वस्ति तेऽस्तु व्रजारिष्टं पुनश्चैहीति भारत ॥ ०१३ ॥

अथापरे मनुष्येन्द्र पुरुषा वाक्यमब्रुवन् ।
नैनं पश्याम संमर्दे धनुरेतत्प्रदृश्यते ॥ ०१४ ॥

एतद्धि भीमनिर्ह्रादं विश्रुतं गाण्डिवं धनुः ।
स्वस्ति गच्छत्वरिष्टं वै पन्थानमकुतोभयम् ॥ ०१५ ॥

निवृत्तमेनं द्रक्ष्यामः पुनरेवं च तेऽब्रुवन् ॥ ०१५ ॥

एवमाद्या मनुष्याणां स्त्रीणां च भरतर्षभ ।
शुश्राव मधुरा वाचः पुनः पुनरुदीरिताः ॥ ०१६ ॥

याज्ञवल्क्यस्य शिष्यश्च कुशलो यज्ञकर्मणि ।
प्रायात्पार्थेन सहितः शान्त्यर्थं वेदपारगः ॥ ०१७ ॥

ब्राह्मणाश्च महीपाल बहवो वेदपारगाः ।
अनुजग्मुर्महात्मानं क्षत्रियाश्च विशोऽपि च ॥ ०१८ ॥

पाण्डवैः पृथिवीमश्वो निर्जितामस्त्रतेजसा ।
चचार स महाराज यथादेशं स सत्तम ॥ ०१९ ॥

तत्र युद्धानि वृत्तानि यान्यासन्पाण्डवस्य ह ।
तानि वक्ष्यामि ते वीर विचित्राणि महान्ति च ॥ ०२० ॥

स हयः पृथिवीं राजन्प्रदक्षिणमरिंदम ।
ससारोत्तरतः पूर्वं तन्निबोध महीपते ॥ ०२१ ॥

अवमृद्नन्स राष्ट्राणि पार्थिवानां हयोत्तमः ।
शनैस्तदा परिययौ श्वेताश्वश्च महारथः ॥ ०२२ ॥

तत्र सङ्कलना नास्ति राज्ञामयुतशस्तदा ।
येऽयुध्यन्त महाराज क्षत्रिया हतबान्धवाः ॥ ०२३ ॥

किराता विकृता राजन्बहवोऽसिधनुर्धराः ।
म्लेच्छाश्चान्ये बहुविधाः पूर्वं विनिकृता रणे ॥ ०२४ ॥

आर्याश्च पृथिवीपालाः प्रहृष्टनरवाहनाः ।
समीयुः पाण्डुपुत्रेण बहवो युद्धदुर्मदाः ॥ ०२५ ॥

एवं युद्धानि वृत्तानि तत्र तत्र महीपते ।
अर्जुनस्य महीपालैर्नानादेशनिवासिभिः ॥ ०२६ ॥

यानि तूभयतो राजन्प्रतप्तानि महान्ति च ।
तानि युद्धानि वक्ष्यामि कौन्तेयस्य तवानघ ॥ ०२७ ॥

---

# त्रैगर्तविजयः

## अध्याय ०७३

वैशंपायन उवाच ॥

त्रिगर्तैरभवद्युद्धं कृतवैरैः किरीटिनः ।
महारथसमाज्ञातैर्हतानां पुत्रनप्तृभिः ॥ ००१ ॥

ते समाज्ञाय संप्राप्तं यज्ञियं तुरगोत्तमम् ।
विषयान्ते ततो वीरा दंशिताः पर्यवारयन् ॥ ००२ ॥

रथिनो बद्धतूणीराः सदश्वैः समलङ्कृतैः ।
परिवार्य हयं राजन्ग्रहीतुं संप्रचक्रमुः ॥ ००३ ॥

ततः किरीटी सञ्चिन्त्य तेषां राज्ञां चिकीर्षितम् ।
वारयामास तान्वीरान्सान्त्वपूर्वमरिंदमः ॥ ००४ ॥

तमनादृत्य ते सर्वे शरैरभ्यहनंस्तदा ।
तमोरजोभ्यां संछन्नांस्तान्किरीटी न्यवारयत् ॥ ००५ ॥

अब्रवीच्च ततो जिष्णुः प्रहसन्निव भारत ।
निवर्तध्वमधर्मज्ञाः श्रेयो जीवितमेव वः ॥ ००६ ॥

स हि वीरः प्रयास्यन्वै धर्मराजेन वारितः ।
हतबान्धवा न ते पार्थ हन्तव्याः पार्थिवा इति ॥ ००७ ॥

स तदा तद्वचः श्रुत्वा धर्मराजस्य धीमतः ।
तान्निवर्तध्वमित्याह न न्यवर्तन्त चापि ते ॥ ००८ ॥

ततस्त्रिगर्तराजानं सूर्यवर्माणमाहवे ।
वितत्य शरजालेन प्रजहास धनञ्जयः ॥ ००९ ॥

ततस्ते रथघोषेण खुरनेमिस्वनेन च ।
पूरयन्तो दिशः सर्वा धनञ्जयमुपाद्रवन् ॥ ०१० ॥

सूर्यवर्मा ततः पार्थे शराणां नतपर्वणाम् ।
शतान्यमुञ्चद्राजेन्द्र लघ्वस्त्रमभिदर्शयन् ॥ ०११ ॥

तथैवान्ये महेष्वासा ये तस्यैवानुयायिनः ।
मुमुचुः शरवर्षाणि धनञ्जयवधैषिणः ॥ ०१२ ॥

स ताञ्ज्यापुङ्खनिर्मुक्तैर्बहुभिः सुबहूञ्शरान् ।
चिच्छेद पाण्डवो राजंस्ते भूमौ न्यपतंस्तदा ॥ ०१३ ॥

केतुवर्मा तु तेजस्वी तस्यैवावरजो युवा ।
युयुधे भ्रातुरर्थाय पाण्डवेन महात्मना ॥ ०१४ ॥

तमापतन्तं संप्रेक्ष्य केतुवर्माणमाहवे ।
अभ्यघ्नन्निशितैर्बाणैर्बीभत्सुः परवीरहा ॥ ०१५ ॥

केतुवर्मण्यभिहते धृतवर्मा महारथः ।
रथेनाशु समावृत्य शरैर्जिष्णुमवाकिरत् ॥ ०१६ ॥

तस्य तां शीघ्रतामीक्ष्य तुतोषातीव वीर्यवान् ।
गुडाकेशो महातेजा बालस्य धृतवर्मणः ॥ ०१७ ॥

न संदधानं ददृशे नाददानं च तं तदा ।
किरन्तमेव स शरान्ददृशे पाकशासनिः ॥ ०१८ ॥

स तु तं पूजयामास धृतवर्माणमाहवे ।
मनसा स मुहूर्तं वै रणे समभिहर्षयन् ॥ ०१९ ॥

तं पन्नगमिव क्रुद्धं कुरुवीरः स्मयन्निव ।
प्रीतिपूर्वं महाराज प्राणैर्न व्यपरोपयत् ॥ ०२० ॥

स तथा रक्ष्यमाणो वै पार्थेनामिततेजसा ।
धृतवर्मा शरं तीक्ष्णं मुमोच विजये तदा ॥ ०२१ ॥

स तेन विजयस्तूर्णमस्यन्विद्धः करे भृशम् ।
मुमोच गाण्डीवं दुःखात्तत्पपाताथ भूतले ॥ ०२२ ॥

धनुषः पततस्तस्य सव्यसाचिकराद्विभो ।

इन्द्रस्येवायुधस्यासीद्रूपं भरतसत्तम ॥ ०२३ ॥

तस्मिन्निपतिते दिव्ये महाधनुषि पार्थिव ।
जहास सस्वनं हासं धृतवर्मा महाहवे ॥ ०२४ ॥

ततो रोषान्वितो जिष्णुः प्रमृज्य रुधिरं करात् ।
धनुरादत्त तद्दिव्यं शरवर्षं ववर्ष च ॥ ०२५ ॥

ततो हलहलाशब्दो दिवस्पृगभवत्तदा ।
नानाविधानां भूतानां तत्कर्मातीव शंसताम् ॥ ०२६ ॥

ततः संप्रेक्ष्य तं क्रुद्धं कालान्तकयमोपमम् ।
जिष्णुं त्रैगर्तका योधास्त्वरिताः पर्यवारयन् ॥ ०२७ ॥

अभिसृत्य परीप्सार्थं ततस्ते धृतवर्मणः ।
परिवव्रुर्गुडाकेशं तत्राक्रुध्यद्धनञ्जयः ॥ ०२८ ॥

ततो योधाञ्जघानाशु तेषां स दश चाष्ट च ।
महेन्द्रवज्रप्रतिमैरायसैर्निशितैः शरैः ॥ ०२९ ॥

तांस्तु प्रभग्नान्संप्रेक्ष्य त्वरमाणो धनञ्जयः ।
शरैराशीविषाकारैर्जघान स्वनवद्धसन् ॥ ०३० ॥

ते भग्नमनसः सर्वे त्रैगर्तकमहारथाः ।
दिशो विदुद्रुवुः सर्वा धनञ्जयशरार्दिताः ॥ ०३१ ॥

त ऊचुः पुरुषव्याघ्रं संशप्तकनिषूदनम् ।
तव स्म किङ्कराः सर्वे सर्वे च वशगास्तव ॥ ०३२ ॥

आज्ञापयस्व नः पार्थ प्रह्वान्प्रेष्यानवस्थितान् ।
करिष्यामः प्रियं सर्वं तव कौरवनन्दन ॥ ०३३ ॥

एतदाज्ञाय वचनं सर्वांस्तानब्रवीत्तदा ।
जीवितं रक्षत नृपाः शासनं गृह्यतामिति ॥ ०३४ ॥

---

## वज्रदत्तपराजयः

## अध्याय ०७४

वैशंपायन उवाच ॥

प्राग्ज्योतिषमथाभ्येत्य व्यचरत्स हयोत्तमः ।
भगदत्तात्मजस्तत्र निर्ययौ रणकर्कशः ॥ ००१ ॥

स हयं पाण्डुपुत्रस्य विषयान्तमुपागतम् ।
युयुधे भरतश्रेष्ठ वज्रदत्तो महीपतिः ॥ ००२ ॥

सोऽभिनिर्याय नगराद्भगदत्तसुतो नृपः ।
अश्वमायान्तमुन्मथ्य नगराभिमुखो ययौ ॥ ००३ ॥

तमालक्ष्य महाबाहुः कुरूणामृषभस्तदा ।
गाण्डीवं विक्षिपंस्तूर्णं सहसा समुपाद्रवत् ॥ ००४ ॥

ततो गाण्डीवनिर्मुक्तैरिषुभिर्मोहितो नृपः ।
हयमुत्सृज्य तं वीरस्ततः पार्थमुपाद्रवत् ॥ ००५ ॥

पुनः प्रविश्य नगरं दंशितः स नृपोत्तमः ।
आरुह्य नागप्रवरं निर्ययौ युद्धकाङ्क्षया ॥ ००६ ॥

पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि ।
दोधूयता चामरेण श्वेतेन च महारथः ॥ ००७ ॥

ततः पार्थं समासाद्य पाण्डवानां महारथम् ।
आह्वयामास कौरव्यं बाल्यान्मोहाच्च संयुगे ॥ ००८ ॥

स वारणं नगप्रख्यं प्रभिन्नकरटामुखम् ।
प्रेषयामास सङ्क्रुद्धस्ततः श्वेतहयं प्रति ॥ ००९ ॥

विक्षरन्तं यथा मेघं परवारणवारणम् ।
शास्त्रवत्कल्पितं संख्ये त्रिसाहं युद्धदुर्मदम् ॥ ०१० ॥

प्रचोद्यमानः स गजस्तेन राज्ञा महाबलः ।
तदाङ्कुशेन विबभावुत्पतिष्यन्निवाम्बरम् ॥ ०११ ॥

तमापतन्तं संप्रेक्ष्य क्रुद्धो राजन्धनञ्जयः ।
भूमिष्ठो वारणगतं योधयामास भारत ॥ ०१२ ॥

वज्रदत्तस्तु सङ्क्रुद्धो मुमोचाशु धनञ्जये ।
तोमरानग्निसङ्काशाञ्शलभानिव वेगितान् ॥ ०१३ ॥

अर्जुनस्तानसंप्राप्तान्गाण्डीवप्रेषितैः शरैः ।
द्विधा त्रिधा च चिच्छेद ख एव खगमैस्तदा ॥ ०१४ ॥

स तान्दृष्ट्वा तथा छिन्नांस्तोमरान्भगदत्तजः ।
इषूनसक्तांस्त्वरितः प्राहिणोत्पाण्डवं प्रति ॥ ०१५ ॥

ततोऽर्जुनस्तूर्णतरं रुक्मपुङ्खानजिह्मगान् ।
प्रेषयामास सङ्क्रुद्धो भगदत्तात्मजं प्रति ॥ ०१६ ॥

स तैर्विद्धो महातेजा वज्रदत्तो महाहवे ।
भृशाहतः पपातोर्व्यां न त्वेनमजहात्स्मृतिः ॥ ०१७ ॥

ततः स पुनरारुह्य वारणप्रवरं रणे ।
अव्यग्रः प्रेषयामास जयार्थी विजयं प्रति ॥ ०१८ ॥

तस्मै बाणांस्ततो जिष्णुर्निर्मुक्ताशीविषोपमान् ।
प्रेषयामास सङ्क्रुद्धो ज्वलितानिव पावकान् ॥ ०१९ ॥

स तैर्विद्धो महानागो विस्रवन्रुधिरं बभौ ।
हिमवानिव शैलेन्द्रो बहुप्रस्रवणस्तदा ॥ ०२० ॥

---

# अध्याय ०७५

वैशंपायन उवाच ॥

एवं त्रिरात्रमभवत्तद्युद्धं भरतर्षभ ।
अर्जुनस्य नरेन्द्रेण वृत्रेणेव शतक्रतोः ॥ ००१ ॥

ततश्चतुर्थे दिवसे वज्रदत्तो महाबलः ।
जहास सस्वनं हासं वाक्यं चेदमथाब्रवीत् ॥ ००२ ॥

अर्जुनार्जुन तिष्ठस्व न मे जीवन्विमोक्ष्यसे ।
त्वां निहत्य करिष्यामि पितुस्तोयं यथाविधि ॥ ००३ ॥

त्वया वृद्धो मम पिता भगदत्तः पितुः सखा ।
हतो वृद्धोऽपचायित्वाच्छिशुं मामद्य योधय ॥ ००४ ॥

इत्येवमुक्त्वा सङ्क्रुद्धो वज्रदत्तो नराधिपः ।
प्रेषयामास कौरव्य वारणं पाण्डवं प्रति ॥ ००५ ॥

संप्रेष्यमाणो नागेन्द्रो वज्रदत्तेन धीमता ।
उत्पतिष्यन्निवाकाशमभिदुद्राव पाण्डवम् ॥ ००६ ॥

अग्रहस्तप्रमुक्तेन शीकरेण स फल्गुनम् ।
समुक्षत महाराज शैलं नील इवाम्बुदः ॥ ००७ ॥

स तेन प्रेषितो राज्ञा मेघवन्निनदन्मुहुः ।
मुखाडम्बरघोषेण समाद्रवत फल्गुनम् ॥ ००८ ॥

स नृत्यन्निव नागेन्द्रो वज्रदत्तप्रचोदितः ।
आससाद द्रुतं राजन्कौरवाणां महारथम् ॥ ००९ ॥

तमापतन्तं संप्रेक्ष्य वज्रदत्तस्य वारणम् ।
गाण्डीवमाश्रित्य बली न व्यकम्पत शत्रुहा ॥ ०१० ॥

चुक्रोध बलवच्चापि पाण्डवस्तस्य भूपतेः ।
कार्यविघ्नमनुस्मृत्य पूर्ववैरं च भारत ॥ ०११ ॥

ततस्तं वारणं क्रुद्धः शरजालेन पाण्डवः ।
निवारयामास तदा वेलेव मकरालयम् ॥ ०१२ ॥

स नागप्रवरो वीर्यादर्जुनेन निवारितः ।
तस्थौ शरैर्वितुन्नाङ्गः श्वाविच्छललितो यथा ॥ ०१३ ॥

निवारितं गजं दृष्ट्वा भगदत्तात्मजो नृपः ।
उत्ससर्ज शितान्बाणानर्जुने क्रोधमूर्छितः ॥ ०१४ ॥

अर्जुनस्तु महाराज शरैः शरविघातिभिः ।

वारयामास तानस्तांस्तदद्भुतमिवाभवत्  ॥ ०१५  ॥

ततः पुनरतिक्रुद्धो राजा प्राग्ज्योतिषाधिपः ।
प्रेषयामास नागेन्द्रं बलवच्छ्वसनोपमम्  ॥ ०१६  ॥

तमापतन्तं संप्रेक्ष्य बलवान्पाकशासनिः ।
नाराचमग्निसङ्काशं प्राहिणोद्वारणं प्रति  ॥ ०१७  ॥

स तेन वारणो राजन्मर्मण्यभिहतो भृशम् ।
पपात सहसा भूमौ वज्ररुग्ण इवाचलः  ॥ ०१८  ॥

स पतञ्शुशुभे नागो धनञ्जयशराहतः ।
विशन्निव महाशैलो महीं वज्रप्रपीडितः  ॥ ०१९  ॥

तस्मिन्निपतिते नागे वज्रदत्तस्य पाण्डवः ।
तं न भेतव्यमित्याह ततो भूमिगतं नृपम्  ॥ ०२०  ॥

अब्रवीद्धि महातेजाः प्रस्थितं मां युधिष्ठिरः ।
राजानस्ते न हन्तव्या धनञ्जय कथञ्चन  ॥ ०२१  ॥

सर्वमेतन्नरव्याघ्र भवत्वेतावता कृतम् ।
योधाश्चापि न हन्तव्या धनञ्जय रणे त्वया  ॥ ०२२  ॥

वक्तव्याश्चापि राजानः सर्वैः सह सुहृज्जनैः ।
युधिष्ठिरस्याश्वमेधो भवद्भिरनुभूयताम्  ॥ ०२३  ॥

इति भ्रातृवचः श्रुत्वा न हन्मि त्वां जनाधिप ।
उत्तिष्ठ न भयं तेऽस्ति स्वस्तिमान्गच्छ पार्थिव  ॥ ०२४  ॥

आगच्छेथा महाराज परां चैत्रीमुपस्थिताम् ।
तदाश्वमेधो भविता धर्मराजस्य धीमतः  ॥ ०२५  ॥

एवमुक्तः स राजा तु भगदत्तात्मजस्तदा ।
तथेत्येवाब्रवीद्वाक्यं पाण्डवेनाभिनिर्जितः ॥ ०२६ ॥

---

# सैन्धवपराजयः

## अध्याय ०७६

वैशंपायन उवाच ॥

सैन्धवैरभवद्युद्धं ततस्तस्य किरीटिनः ।
हतशेषैर्महाराज हतानां च सुतैरपि ॥ ००१ ॥

तेऽवतीर्णमुपश्रुत्य विषयं श्वेतवाहनम् ।
प्रत्युद्ययुरमृष्यन्तो राजानः पाण्डवर्षभम् ॥ ००२ ॥

अश्वं च तं परामृश्य विषयान्ते विषोपमाः ।
न भयं चक्रिरे पार्थाद्भीमसेनादनन्तरात् ॥ ००३ ॥

तेऽविदूराद्धनुष्पाणिं यज्ञियस्य हयस्य च ।
बीभत्सुं प्रत्यपद्यन्त पदातिनमवस्थितम् ॥ ००४ ॥

ततस्ते तु महावीर्या राजानः पर्यवारयन् ।
जिगीषन्तो नरव्याघ्राः पूर्वं विनिकृता युधि ॥ ००५ ॥

ते नामान्यथ गोत्राणि कर्माणि विविधानि च ।
कीर्तयन्तस्तदा पार्थं शरवर्षैरवाकिरन् ॥ ००६ ॥

ते किरन्तः शरांस्तीक्ष्णान्वारणेन्द्रनिवारणान् ।
रणे जयमभीप्सन्तः कौन्तेयं पर्यवारयन् ॥ ००७ ॥

तेऽसमीक्ष्यैव तं वीरमुग्रकर्माणमाहवे ।
सर्वे युयुधिरे वीरा रथस्थास्तं पदातिनम् ॥ ००८ ॥

ते तमाजघ्निरे वीरं निवातकवचान्तकम् ।
संशप्तकनिहन्तारं हन्तारं सैन्धवस्य च ॥ ००९ ॥

ततो रथसहस्रेण हयानामयुतेन च ।
कोष्ठकीकृत्य कौन्तेयं संप्रहृष्टमयोधयन् ॥ ०१० ॥

संस्मरन्तो वधं वीराः सिन्धुराजस्य धीमतः ।
जयद्रथस्य कौरव्य समरे सव्यसाचिना ॥ ०११ ॥

ततः पर्जन्यवत्सर्वे शरवृष्टिमवासृजन् ।
तैः कीर्णः शुशुभे पार्थो रविर्मेघान्तरे यथा ॥ ०१२ ॥

स शरैः समवच्छन्नो ददृशे पाण्डवर्षभः ।
पञ्जरान्तरसञ्चारी शकुन्त इव भारत ॥ ०१३ ॥

ततो हाहाकृतं सर्वं कौन्तेये शरपीडिते ।
त्रैलोक्यमभवद्राजन्रविश्चासीद्रजोरुणः ॥ ०१४ ॥

ततो ववौ महाराज मारुतो रोमहर्षणः ।
राहुरग्रसदादित्यं युगपत्सोममेव च ॥ ०१५ ॥

उल्काश्च जघ्निरे सूर्यं विकीर्यन्त्यः समन्ततः ।
वेपथुश्चाभवद्राजन्कैलासस्य महागिरेः ॥ ०१६ ॥

मुमुचुश्चास्त्रमत्युष्णं दुःखशोकसमन्विताः ।
सप्तर्षयो जातभयास्तथा देवर्षयोऽपि च ॥ ०१७ ॥

शशश्चाशु विनिर्भिद्य मण्डलं शशिनोऽपतत् ।
विपरीतस्तदा राजंस्तस्मिन्नुत्पातलक्षणे ॥ ०१८ ॥

रासभारुणसङ्काशा धनुष्मन्तः सविद्युतः ।
आवृत्य गगनं मेघा मुमुचुर्मांसशोणितम् ॥ ०१९ ॥

एवमासीत्तदा वीरे शरवर्षाभिसंवृते ।
लोकेऽस्मिन्भरतश्रेष्ठ तदद्भुतमिवाभवत् ॥ ०२० ॥

तस्य तेनावकीर्णस्य शरजालेन सर्वशः ।
मोहात्पपात गाण्डीवमावापश्च करादपि ॥ ०२१ ॥

तस्मिन्मोहमनुप्राप्ते शरजालं महत्तरम् ।
सैन्धवा मुमुचुस्तूर्णं गतसत्त्वे महारथे ॥ ०२२ ॥

ततो मोहसमापन्नं ज्ञात्वा पार्थं दिवौकसः ।
सर्वे वित्रस्तमनसस्तस्य शान्तिपराभवन् ॥ ०२३ ॥

ततो देवर्षयः सर्वे तथा सप्तर्षयोऽपि च ।
ब्रह्मर्षयश्च विजयं जेपुः पार्थस्य धीमतः ॥ ०२४ ॥

ततः प्रदीपिते देवैः पार्थतेजसि पार्थिव ।
तस्थावचलवद्धीमान्सङ्ग्रामे परमास्त्रवित् ॥ ०२५ ॥

विचकर्ष धनुर्दिव्यं ततः कौरवनन्दनः ।
यन्त्रस्येवेह शब्दोऽभून्महांस्तस्य पुनः पुनः ॥ ०२६ ॥

ततः स शरवर्षाणि प्रत्यमित्रान्प्रति प्रभुः ।

ववर्ष धनुषा पार्थो वर्षाणीव सुरेश्वरः ॥ ०२७ ॥

ततस्ते सैन्धवा योधाः सर्व एव सराजकाः ।
नादृश्यन्त शरैः कीर्णाः शलभैरिव पावकाः ॥ ०२८ ॥

तस्य शब्देन वित्रेसुर्भयार्ताश्च विदुद्रुवुः ।
मुमुचुश्चाश्रु शोकार्ताः सुषुपुश्चापि सैन्धवाः ॥ ०२९ ॥

तांस्तु सर्वान्नरश्रेष्ठः सर्वतो विचरन्बली ।
अलातचक्रवद्राजञ्शरजालैः समर्पयत् ॥ ०३० ॥

तदिन्द्रजालप्रतिमं बाणजालममित्रहा ।
व्यसृजद्दिक्षु सर्वासु महेन्द्र इव वज्रभृत् ॥ ०३१ ॥

मेघजालनिभं सैन्यं विदार्य स रविप्रभः ।
विबभौ कौरवश्रेष्ठः शरदीव दिवाकरः ॥ ०३२ ॥

---

# अध्याय ०७७

वैशंपायन उवाच ॥

ततो गाण्डीवभृच्छूरो युद्धाय समवस्थितः ।
विबभौ युधि दुर्धर्षो हिमवानचलो यथा ॥ ००१ ॥

ततः सैन्धवयोधास्ते पुनरेव व्यवस्थिताः ।
विमुञ्चन्तः सुसंरब्धाः शरवर्षाणि भारत ॥ ००२ ॥

तान्प्रसह्य महावीर्यः पुनरेव व्यवस्थितान् ।
ततः प्रोवाच कौन्तेयो मुमूर्षूञ्श्लक्ष्णया गिरा ॥ ००३ ॥

युध्यध्वं परया शक्त्या यतध्वं च वधे मम ।
कुरुध्वं सर्वकार्याणि महद्वो भयमागतम् ॥ ००४ ॥

एष योत्स्यामि वः सर्वान्निवार्य शरवागुराम् ।
तिष्ठध्वं युद्धमनसो दर्पं विनयितास्मि वः ॥ ००५ ॥

एतावदुक्त्वा कौरव्यो रुषा गाण्डीवभृत्तदा ।
ततोऽथ वचनं स्मृत्वा भ्रातुर्ज्येष्ठस्य भारत ॥ ००६ ॥

न हन्तव्या रणे तात क्षत्रिया विजिगीषवः ।
जेतव्याश्चेति यत्प्रोक्तं धर्मराज्ञा महात्मना ॥ ००७ ॥

चिन्तयामास च तदा फल्गुनः पुरुषर्षभः ॥ ००७ ॥

इत्युक्तोऽहं नरेन्द्रेण न हन्तव्या नृपा इति ।
कथं तन्न मृषेह स्याद्धर्मराजवचः शुभम् ॥ ००८ ॥

न हन्येरंश्च राजानो राज्ञश्चाज्ञा कृता भवेत् ।
इति सञ्चिन्त्य स तदा भ्रातुः प्रियहिते रतः ॥ ००९ ॥

प्रोवाच वाक्यं धर्मज्ञः सैन्धवान्युद्धदुर्मदान् ॥ ००९ ॥

बालान्स्त्रियो वा युष्माकं न हनिष्ये व्यवस्थितान् ।
यश्च वक्ष्यति सङ्ग्रामे तवास्मीति पराजितः ॥ ०१० ॥

एतच्छ्रुत्वा वचो मह्यं कुरुध्वं हितमात्मनः ।
अतोऽन्यथा कृच्छ्रगता भविष्यथ मयार्दिताः ॥ ०११ ॥

एवमुक्त्वा तु तान्वीरान्युयुधे कुरुपुङ्गवः ।
अत्वरावानसंरब्धः संरब्धैर्विजिगीषुभिः ॥ ०१२ ॥

ततः शतसहस्राणि शराणां नतपर्वणाम् ।
मुमुचुः सैन्धवा राजंस्तदा गाण्डीवधन्वनि ॥ ०१३ ॥

स तानापततः क्रूरानाशीविषविषोपमान् ।
चिच्छेद निशितैर्बाणैरन्तरैव धनञ्जयः ॥ ०१४ ॥

छित्त्वा तु तानाशुगमान्कङ्कपत्राञ्शिलाशितान् ।
एकैकमेष दशभिर्बिभेद समरे शरैः ॥ ०१५ ॥

ततः प्रासांश्च शक्तीश्च पुनरेव धनञ्जये ।
जयद्रथं हतं स्मृत्वा चिक्षिपुः सैन्धवा नृपाः ॥ ०१६ ॥

तेषां किरीटी सङ्कल्पं मोघं चक्रे महामनाः ।
सर्वांस्तानन्तरा छित्त्वा मुदा चुक्रोश पाण्डवः ॥ ०१७ ॥

तथैवापततां तेषां योधानां जयगृद्धिनाम् ।
शिरांसि पातयामास भल्लैः संनतपर्वभिः ॥ ०१८ ॥

तेषां प्रद्रवतां चैव पुनरेव च धावताम् ।
निवर्ततां च शब्दोऽभूत्पूर्णस्येव महोदधेः ॥ ०१९ ॥

ते वध्यमानास्तु तदा पार्थेनामिततेजसा ।
यथाप्राणं यथोत्साहं योधयामासुरर्जुनम् ॥ ०२० ॥

ततस्ते फल्गुनेनाजौ शरैः संनतपर्वभिः ।
कृता विसञ्ज्ञा भूयिष्ठाः क्लान्तवाहनसैनिकाः ॥ ०२१ ॥

तांस्तु सर्वान्परिग्लानान्विदित्वा धृतराष्ट्रजा ।

दुःशला बालमादाय नप्तारं प्रययौ तदा ॥ ०२२ ॥

सुरथस्य सुतं वीरं रथेनानागसं तदा ॥ ०२२ ॥

शान्त्यर्थं सर्वयोधानामभ्यगच्छत पाण्डवम् ।
सा धनञ्जयमासाद्य मुमोचार्तस्वरं तदा ॥ ०२३ ॥

धनञ्जयोऽपि तां दृष्ट्वा धनुर्विससृजे प्रभुः ॥ ०२३ ॥

समुत्सृष्टधनुः पार्थो विधिवद्भगिनीं तदा ।
प्राह किं करवाणीति सा च तं वाक्यमब्रवीत् ॥ ०२४ ॥

एष ते भरतश्रेष्ठ स्वस्रीयस्यात्मजः शिशुः ।
अभिवादयते वीर तं पश्य पुरुषर्षभ ॥ ०२५ ॥

इत्युक्तस्तस्य पितरं स पप्रच्छार्जुनस्तदा ।
क्वासाविति ततो राजन्दुःशला वाक्यमब्रवीत् ॥ ०२६ ॥

पितृशोकाभिसंतप्तो विषादार्तोऽस्य वै पिता ।
पञ्चत्वमगमद्वीर यथा तन्मे निबोध ह ॥ ०२७ ॥

स पूर्वं पितरं श्रुत्वा हतं युद्धे त्वयानघ ।
त्वामागतं च संश्रुत्य युद्धाय हयसारिणम् ॥ ०२८ ॥

पितुश्च मृत्युदुःखार्तोऽजहात्प्राणान्धनञ्जय ॥ ०२८ ॥

प्राप्तो बीभत्सुरित्येव नाम श्रुत्वैव तेऽनघ ।
विषादार्तः पपातोर्व्यां ममार च ममात्मजः ॥ ०२९ ॥

तं तु दृष्ट्वा निपतितं ततस्तस्यात्मजं विभो ।
गृहीत्वा समनुप्राप्ता त्वामद्य शरणैषिणी ॥ ०३० ॥

इत्युक्त्वार्तस्वरं सा तु मुमोच धृतराष्ट्रजा ।
दीना दीनं स्थितं पार्थमब्रवीच्चाप्यधोमुखम्  ॥ ०३१  ॥

स्वसारं मामवेक्षस्व स्वस्रीयात्मजमेव च ।
कर्तुमर्हसि धर्मज्ञ दयां मयि कुरूद्वह  ॥ ०३२  ॥

विस्मृत्य कुरुराजानं तं च मन्दं जयद्रथम्  ॥ ०३२  ॥

अभिमन्योर्यथा जातः परिक्षित्परवीरहा ।
तथायं सुरथाज्जातो मम पौत्रो महाभुज  ॥ ०३३  ॥

तमादाय नरव्याघ्र संप्राप्तास्मि तवान्तिकम् ।
शमार्थं सर्वयोधानां श्रृणु चेदं वचो मम  ॥ ०३४  ॥

आगतोऽयं महाबाहो तस्य मन्दस्य पौत्रकः ।
प्रसादमस्य बालस्य तस्मात्त्वं कर्तुमर्हसि  ॥ ०३५  ॥

एष प्रसाद्य शिरसा मया सार्धमरिंदम ।
याचते त्वां महाबाहो शमं गच्छ धनञ्जय  ॥ ०३६  ॥

बालस्य हतबन्धोश्च पार्थ किञ्चिदजानतः ।
प्रसादं कुरु धर्मज्ञ मा मन्युवशमन्वगाः  ॥ ०३७  ॥

तमनार्यं नृशंसं च विस्मृत्यास्य पितामहम् ।
आगस्कारिणमत्यर्थं प्रसादं कर्तुमर्हसि  ॥ ०३८  ॥

एवं ब्रुवत्यां करुणं दुःशलायां धनञ्जयः ।
संस्मृत्य देवीं गान्धारीं धृतराष्ट्रं च पार्थिवम्  ॥ ०३९  ॥

प्रोवाच दुःखशोकार्तः क्षत्रधर्मं विगर्हयन्  ॥ ०३९  ॥

धिक्तं दुर्योधनं क्षुद्रं राज्यलुब्धं च मानिनम् ।
यत्कृते बान्धवाः सर्वे मया नीता यमक्षयम्  ॥ ०४०  ॥

इत्युक्त्वा बहु सान्त्वादि प्रसादमकरोज्जयः ।
परिष्वज्य च तां प्रीतो विससर्ज गृहान्प्रति  ॥ ०४१  ॥

दुःशला चापि तान्योधान्निवार्य महतो रणात् ।
संपूज्य पार्थं प्रययौ गृहान्प्रति शुभानना  ॥ ०४२  ॥

ततः सैन्धवकान्योधान्विनिर्जित्य नरर्षभः ।
पुनरेवान्वधावत्स तं हयं कामचारिणम्  ॥ ०४३  ॥

ससार यज्ञियं वीरो विधिवत्स विशां पते ।
तारामृगमिवाकाशे देवदेवः पिनाकधृक्  ॥ ०४४  ॥

स च वाजी यथेष्टेन तांस्तान्देशान्यथासुखम् ।
विचचार यथाकामं कर्म पार्थस्य वर्धयन्  ॥ ०४५  ॥

क्रमेण स हयस्त्वेवं विचरन्भरतर्षभ ।
मणिपूरपतेर्देशमुपायात्सहपाण्डवः  ॥ ०४६  ॥

---

# बभ्रुवाहनयुद्धम्

## अध्याय ०७८

वैशंपायन उवाच  ॥

श्रुत्वा तु नृपतिर्वीरं पितरं बभ्रुवाहनः ।
निर्ययौ विनयेनार्यो ब्राह्मणार्घ्यपुरःसरः ॥ ००१ ॥

मणिपूरेश्वरं त्वेवमुपयातं धनञ्जयः ।
नाभ्यनन्दत मेधावी क्षत्रधर्ममनुस्मरन् ॥ ००२ ॥

उवाच चैनं धर्मात्मा समन्युः फल्गुनस्तदा ।
प्रक्रियेयं न ते युक्ता बहिस्त्वं क्षत्रधर्मतः ॥ ००३ ॥

संरक्ष्यमाणं तुरगं यौधिष्ठिरमुपागतम् ।
यज्ञियं विषयान्ते मां नायोत्सीः किं नु पुत्रक ॥ ००४ ॥

धिक्त्वामस्तु सुदुर्बुद्धिं क्षत्रधर्माविशारदम् ।
यो मां युद्धाय संप्राप्तं साम्नैवाथो त्वमग्रहीः ॥ ००५ ॥

न त्वया पुरुषार्थश्च कश्चिदस्तीह जीवता ।
यस्त्वं स्त्रीवद्युधा प्राप्तं साम्ना मां प्रत्यगृह्णथाः ॥ ००६ ॥

यद्यहं न्यस्तशस्त्रस्त्वामागच्छेयं सुदुर्मते ।
प्रक्रियेयं ततो युक्ता भवेत्तव नराधम ॥ ००७ ॥

तमेवमुक्तं भर्त्रा तु विदित्वा पन्नगात्मजा ।
अमृष्यमाणा भित्त्वोर्वीमुलूपी तमुपागमत् ॥ ००८ ॥

सा ददर्श ततः पुत्रं विमृशन्तमधोमुखम् ।
संतर्ज्यमानमसकृद्भर्त्रा युद्धार्थिना विभो ॥ ००९ ॥

ततः सा चारुसर्वाङ्गी तमुपेत्योरगात्मजा ।
उलूपी प्राह वचनं क्षत्रधर्मविशारदा ॥ ०१० ॥

उलूपीं मां निबोध त्वं मातरं पन्नगात्मजाम् ।
कुरुष्व वचनं पुत्र धर्मस्ते भविता परः ॥ ०११ ॥

युध्यस्वैनं कुरुश्रेष्ठं धनञ्जयमरिंदम ।
एवमेष हि ते प्रीतो भविष्यति न संशयः ॥ ०१२ ॥

एवमुद्धर्षितो मात्रा स राजा बभ्रुवाहनः ।
मनश्चक्रे महातेजा युद्धाय भरतर्षभ ॥ ०१३ ॥

संनह्य काञ्चनं वर्म शिरस्त्राणं च भानुमत् ।
तूणीरशतसंबाधमारुरोह महारथम् ॥ ०१४ ॥

सर्वोपकरणैर्युक्तं युक्तमश्वैर्मनोजवैः ।
सुचक्रोपस्करं धीमान्हेमभाण्डपरिष्कृतम् ॥ ०१५ ॥

परमार्चितमुच्छ्रित्य ध्वजं सिंहं हिरण्मयम् ।
प्रययौ पार्थमुद्दिश्य स राजा बभ्रुवाहनः ॥ ०१६ ॥

ततोऽभ्येत्य हयं वीरो यज्ञियं पार्थरक्षितम् ।
ग्राहयामास पुरुषैर्हयशिक्षाविशारदैः ॥ ०१७ ॥

गृहीतं वाजिनं दृष्ट्वा प्रीतात्मा स धनञ्जयः ।
पुत्रं रथस्थं भूमिष्ठः संन्यवारयदाहवे ॥ ०१८ ॥

ततः स राजा तं वीरं शरव्रातैः सहस्रशः ।
अर्दयामास निशितैराशीविषविषोपमैः ॥ ०१९ ॥

तयोः समभवद्युद्धं पितुः पुत्रस्य चातुलम् ।
देवासुररणप्रख्यमुभयोः प्रीयमाणयोः ॥ ०२० ॥

किरीटिनं तु विव्याध शरेण नतपर्वणा ।

जत्रुदेशे नरव्याघ्रः प्रहसन्बभ्रुवाहनः ॥ ०२१ ॥

सोऽभ्यगात्सह पुङ्खेन वल्मीकमिव पन्नगः ।
विनिर्भिद्य च कौन्तेयं महीतलमथाविशत् ॥ ०२२ ॥

स गाढवेदनो धीमानालम्ब्य धनुरुत्तमम् ।
दिव्यं तेजः समाविश्य प्रमीत इव संबभौ ॥ ०२३ ॥

स सञ्ज्ञामुपलभ्याथ प्रशस्य पुरुषर्षभः ।
पुत्रं शक्रात्मजो वाक्यमिदमाह महीपते ॥ ०२४ ॥

साधु साधु महाबाहो वत्स चित्राङ्गदात्मज ।
सदृशं कर्म ते दृष्ट्वा प्रीतिमानस्मि पुत्रक ॥ ०२५ ॥

विमुञ्चाम्येष बाणांस्ते पुत्र युद्धे स्थिरो भव ।
इत्येवमुक्त्वा नाराचैरभ्यवर्षदमित्रहा ॥ ०२६ ॥

तान्स गाण्डीवनिर्मुक्तान्वज्राशनिसमप्रभान् ।
नाराचैरच्छिनद्राजा सर्वानेव त्रिधा त्रिधा ॥ ०२७ ॥

तस्य पार्थः शरैर्दिव्यैर्ध्वजं हेमपरिष्कृतम् ।
सुवर्णतालप्रतिमं क्षुरेणापाहरद्रथात् ॥ ०२८ ॥

हयांश्चास्य महाकायान्महावेगपराक्रमान् ।
चकार राज्ञो निर्जीवान्प्रहसन्पाण्डवर्षभः ॥ ०२९ ॥

स रथादवतीर्याशु राजा परमकोपनः ।
पदातिः पितरं कोपाद्योधयामास पाण्डवम् ॥ ०३० ॥

संप्रीयमाणः पाण्डूनामृषभः पुत्रविक्रमात् ।
नात्यर्थं पीडयामास पुत्रं वज्रधरात्मजः ॥ ०३१ ॥

स हन्यमानो विमुखं पितरं बभ्रुवाहनः ।
शरैराशीविषाकारैः पुनरेवार्दयद्बली ॥ ०३२ ॥

ततः स बाल्यात्पितरं विव्याध हृदि पत्रिणा ।
निशितेन सुपुङ्खेन बलवद्बभ्रुवाहनः ॥ ०३३ ॥

स बाणस्तेजसा दीप्तो ज्वलन्निव हुताशनः ।
विवेश पाण्डवं राजन्मर्म भित्त्वातिदुःखकृत् ॥ ०३४ ॥

स तेनातिभृशं विद्धः पुत्रेण कुरुनन्दनः ।
महीं जगाम मोहार्तस्ततो राजन्धनञ्जयः ॥ ०३५ ॥

तस्मिन्निपतिते वीरे कौरवाणां धुरंधरे ।
सोऽपि मोहं जगामाशु ततश्चित्राङ्गदासुतः ॥ ०३६ ॥

व्यायम्य संयुगे राजा दृष्ट्वा च पितरं हतम् ।
पूर्वमेव च बाणौघैर्गाढविद्धोऽर्जुनेन सः ॥ ०३७ ॥

भर्तारं निहतं दृष्ट्वा पुत्रं च पतितं भुवि ।
चित्राङ्गदा परित्रस्ता प्रविवेश रणाजिरम् ॥ ०३८ ॥

शोकसंतप्तहृदया रुदती सा ततः शुभा ।
मणिपूरपतेर्माता ददर्श निहतं पतिम् ॥ ०३९ ॥

# अध्याय ०७९

वैशंपायन उवाच ॥

ततो बहुविधं भीरुर्विलप्य कमलेक्षणा ।
मुमोह दुःखाद्दुर्धर्षा निपपात च भूतले ॥ ००१ ॥

प्रतिलभ्य च सा सञ्ज्ञां देवी दिव्यवपुर्धरा ।
उलूपीं पन्नगसुतां दृष्ट्वेदं वाक्यमब्रवीत् ॥ ००२ ॥

उलूपि पश्य भर्तारं शयानं निहतं रणे ।
त्वत्कृते मम पुत्रेण बालेन समितिञ्जयम् ॥ ००३ ॥

ननु त्वमार्ये धर्मज्ञा ननु चासि पतिव्रता ।
यत्त्वत्कृतेऽयं पतितः पतिस्ते निहतो रणे ॥ ००४ ॥

किं तु सर्वापराधोऽयं यदि तेऽद्य धनञ्जयः ।
क्षमस्व याच्यमाना मे सञ्जीवय धनञ्जयम् ॥ ००५ ॥

ननु त्वमार्ये धर्मज्ञा त्रैलोक्यविदिता शुभे ।
यद्घातयित्वा भर्तारं पुत्रेणेह न शोचसि ॥ ००६ ॥

नाहं शोचामि तनयं निहतं पन्नगात्मजे ।
पतिमेव तु शोचामि यस्यातिथ्यमिदं कृतम् ॥ ००७ ॥

इत्युक्त्वा सा तदा देवीमुलूपीं पन्नगात्मजाम् ।
भर्तारमभिगम्येदमित्युवाच यशस्विनी ॥ ००८ ॥

उत्तिष्ठ कुरुमुख्यस्य प्रियकाम मम प्रिय ।
अयमश्वो महाबाहो मया ते परिमोक्षितः ॥ ००९ ॥

ननु नाम त्वया वीर धर्मराजस्य यज्ञियः ।
अयमश्वोऽनुसर्तव्यः स शेषे किं महीतले ॥ ०१० ॥

त्वयि प्राणाः समायत्ताः कुरूणां कुरुनन्दन ।
स कस्मात्प्राणदोऽन्येषां प्राणान्संत्यक्तवानसि ॥ ०११ ॥

उलूपि साधु संपश्य भर्तारं निहतं रणे ।
पुत्रं चैनं समुत्साह्य घातयित्वा न शोचसि ॥ ०१२ ॥

कामं स्वपितु बालोऽयं भूमौ प्रेतगतिं गतः ।
लोहिताक्षो गुडाकेशो विजयः साधु जीवतु ॥ ०१३ ॥

नापराधोऽस्ति सुभगे नराणां बहुभार्यता ।
नारीणां तु भवत्येतन्मा ते भूद्बुद्धिरीदृशी ॥ ०१४ ॥

सख्यं ह्येतत्कृतं धात्रा शाश्वतं चाव्ययं च ह ।
सख्यं समभिजानीहि सत्यं सङ्गतमस्तु ते ॥ ०१५ ॥

पुत्रेण घातयित्वेमं पतिं यदि न मेऽद्य वै ।
जीवन्तं दर्शयस्यद्य परित्यक्ष्यामि जीवितम् ॥ ०१६ ॥

साहं दुःखान्विता भीरु पतिपुत्रविनाकृता ।
इहैव प्रायमासिष्ये प्रेक्षन्त्यास्ते न संशयः ॥ ०१७ ॥

इत्युक्त्वा पन्नगसुतां सपत्नीं चैत्रवाहिनी ।
ततः प्रायमुपासीना तूष्णीमासीज्जनाधिप ॥ ०१८ ॥

# अध्याय ०८०

वैशंपायन उवाच ॥

तथा विलप्योपरता भर्तुः पादौ प्रगृह्य सा ।
उपविष्टाभवद्देवी सोच्छ्वासं पुत्रमीक्षती ॥ ००१ ॥

ततः सञ्ज्ञां पुनर्लब्ध्वा स राजा बभ्रुवाहनः ।
मातरं तामथालोक्य रणभूमावथाब्रवीत् ॥ ००२ ॥

इतो दुःखतरं किं नु यन्मे माता सुखैधिता ।
भूमौ निपतितं वीरमनुशेते मृतं पतिम् ॥ ००३ ॥

निहन्तारं रणेऽरीणां सर्वशस्त्रभृतां वरम् ।
मया विनिहतं संख्ये प्रेक्षते दुर्मरं बत ॥ ००४ ॥

अहोऽस्या हृदयं देव्या दृढं यन्न विदीर्यते ।
व्यूढोरस्कं महाबाहुं प्रेक्षन्त्या निहतं पतिम् ॥ ००५ ॥

दुर्मरं पुरुषेणेह मन्ये ह्यध्वन्यनागते ।
यत्र नाहं न मे माता विप्रयुज्येत जीवितात् ॥ ००६ ॥

अहो धिक्कुरुवीरस्य ह्युरःस्थं काञ्चनं भुवि ।
व्यपविद्धं हतस्येह मया पुत्रेण पश्यत ॥ ००७ ॥

भो भो पश्यत मे वीरं पितरं ब्राह्मणा भुवि ।
शयानं वीरशयने मया पुत्रेण पातितम् ॥ ००८ ॥

ब्राह्मणाः कुरुमुख्यस्य प्रयुक्ता हयसारिणः ।
कुर्वन्तु शान्तिकां त्वद्य रणे योऽयं मया हतः ॥ ००९ ॥

व्यादिशन्तु च किं विप्राः प्रायश्चित्तमिहाद्य मे ।
सुनृशंसस्य पापस्य पितृहन्तू रणाजिरे ॥ ०१० ॥

दुश्चरा द्वादश समा हत्वा पितरमद्य वै ।
ममेह सुनृशंसस्य संवीतस्यास्य चर्मणा ॥ ०११ ॥

शिरःकपाले चास्यैव भुञ्जतः पितुरद्य मे ।
प्रायश्चित्तं हि नास्त्यन्यद्धत्वाद्य पितरं मम ॥ ०१२ ॥

पश्य नागोत्तमसुते भर्तारं निहतं मया ।
कृतं प्रियं मया तेऽद्य निहत्य समरेऽर्जुनम् ॥ ०१३ ॥

सोऽहमप्यद्य यास्यामि गतिं पितृनिषेविताम् ।
न शक्नोम्यात्मनात्मानमहं धारयितुं शुभे ॥ ०१४ ॥

सा त्वं मयि मृते मातस्तथा गाण्डीवधन्वनि ।
भव प्रीतिमती देवि सत्येनात्मानमालभे ॥ ०१५ ॥

इत्युक्त्वा स तदा राजा दुःखशोकसमाहतः ।
उपस्पृश्य महाराज दुःखाद्वचनमब्रवीत् ॥ ०१६ ॥

शृण्वन्तु सर्वभूतानि स्थावराणि चराणि च ।
त्वं च मातर्यथा सत्यं ब्रवीमि भुजगोत्तमे ॥ ०१७ ॥

यदि नोत्तिष्ठति जयः पिता मे भरतर्षभः ।
अस्मिन्नेव रणोद्देशे शोषयिष्ये कलेवरम् ॥ ०१८ ॥

न हि मे पितरं हत्वा निष्कृतिर्विद्यते क्वचित् ।
नरकं प्रतिपत्स्यामि ध्रुवं गुरुवधार्दितः ॥ ०१९ ॥

वीरं हि क्षत्रियं हत्वा गोशतेन प्रमुच्यते ।

पितरं तु निहत्यैवं दुस्तरा निष्कृतिर्मया ॥ ०२० ॥

एष ह्येको महातेजाः पाण्डुपुत्रो धनञ्जयः ।
पिता च मम धर्मात्मा तस्य मे निष्कृतिः कुतः ॥ ०२१ ॥

इत्येवमुक्त्वा नृपते धनञ्जयसुतो नृपः ।
उपस्पृश्याभवत्तूष्णीं प्रायोपेतो महामतिः ॥ ०२२ ॥

---

# अध्याय ०८१

वैशंपायन उवाच ॥

प्रायोपविष्टे नृपतौ मणिपूरेश्वरे तदा ।
पितृशोकसमाविष्टे सह मात्रा परंतप ॥ ००१ ॥

उलूपी चिन्तयामास तदा सञ्जीवनं मणिम् ।
स चोपातिष्ठत तदा पन्नगानां परायणम् ॥ ००२ ॥

तं गृहीत्वा तु कौरव्य नागराजपतेः सुता ।
मनःप्रह्लादनीं वाचं सैनिकानामथाब्रवीत् ॥ ००३ ॥

उत्तिष्ठ मा शुचः पुत्र नैष जिष्णुस्त्वया हतः ।
अजेयः पुरुषैरेष देवैर्वापि सवासवैः ॥ ००४ ॥

मया तु मोहिनी नाम मायैषा संप्रयोजिता ।
प्रियार्थं पुरुषेन्द्रस्य पितुस्तेऽद्य यशस्विनः ॥ ००५ ॥

जिज्ञासुर्ह्येष वै पुत्र बलस्य तव कौरवः ।
सङ्ग्रामे युध्यतो राजन्नागतः परवीरहा ॥ ००६ ॥

तस्मादसि मया पुत्र युद्धार्थं परिचोदितः ।
मा पापमात्मनः पुत्र शङ्केथास्त्वण्वपि प्रभो ॥ ००७ ॥

ऋषिरेष महातेजाः पुरुषः शाश्वतोऽव्ययः ।
नैनं शक्तो हि सङ्ग्रामे जेतुं शक्रोऽपि पुत्रक ॥ ००८ ॥

अयं तु मे मणिर्दिव्यः समानीतो विशां पते ।
मृतान्मृतान्पन्नगेन्द्रान्यो जीवयति नित्यदा ॥ ००९ ॥

एतमस्योरसि त्वं तु स्थापयस्व पितुः प्रभो ।
सञ्जीवितं पुनः पुत्र ततो द्रष्टासि पाण्डवम् ॥ ०१० ॥

इत्युक्तः स्थापयामास तस्योरसि मणिं तदा ।
पार्थस्यामिततेजाः स पितुः स्नेहादपापकृत् ॥ ०११ ॥

तस्मिन्न्यस्ते मणौ वीर जिष्णुरुज्जीवितः प्रभुः ।
सुप्तोत्थित इवोत्तस्थौ मृष्टलोहितलोचनः ॥ ०१२ ॥

तमुत्थितं महात्मानं लब्धसञ्ज्ञं मनस्विनम् ।
समीक्ष्य पितरं स्वस्थं ववन्दे बभ्रुवाहनः ॥ ०१३ ॥

उत्थिते पुरुषव्याघ्रे पुनर्लक्ष्मीवति प्रभो ।
दिव्याः सुमनसः पुण्या ववृषे पाकशासनः ॥ ०१४ ॥

अनाहता दुन्दुभयः प्रणेदुर्मेघनिस्वनाः ।
साधु साध्विति चाकाशे बभूव सुमहान्स्वनः ॥ ०१५ ॥

उत्थाय तु महाबाहुः पर्याश्वस्तो धनञ्जयः ।

बभ्रुवाहनमालिङ्ग्य समाजिघ्रत मूर्धनि ॥ ०१६ ॥

ददर्श चाविदूरेऽस्य मातरं शोककर्शिताम् ।
उलूप्या सह तिष्ठन्तीं ततोऽपृच्छद्धनञ्जयः ॥ ०१७ ॥

किमिदं लक्ष्यते सर्वं शोकविस्मयहर्षवत् ।
रणाजिरममित्रघ्न यदि जानासि शंस मे ॥ ०१८ ॥

जननी च किमर्थं ते रणभूमिमुपागता ।
नागेन्द्रदुहिता चेयमुलूपी किमिहागता ॥ ०१९ ॥

जानाम्यहमिदं युद्धं त्वया मद्वचनात्कृतम् ।
स्त्रीणामागमने हेतुमहमिच्छामि वेदितुम् ॥ ०२० ॥

तमुवाच ततः पृष्टो मणिपूरपतिस्तदा ।
प्रसाद्य शिरसा विद्वानुलूपी पृच्छ्यतामिति ॥ ०२१ ॥

---

# अध्याय ०८२

अर्जुन उवाच ॥

किमागमनकृत्यं ते कौरव्यकुलनन्दिनि ।
मणिपूरपतेर्मातुस्तथैव च रणाजिरे ॥ ००१ ॥

कच्चित्कुशलकामासि राज्ञोऽस्य भुजगात्मजे ।
मम वा चञ्चलापाङ्गे कच्चित्त्वं शुभमिच्छसि ॥ ००२ ॥

कच्चित्ते पृथुलश्रोणि नाप्रियं शुभदर्शने ।

अकार्षमहमज्ञानादयं वा बभ्रुवाहनः ॥ ००३ ॥

कच्चिच्च राजपुत्री ते सपत्नी चैत्रवाहिनी ।
चित्राङ्गदा वरारोहा नापराध्यति किञ्चन ॥ ००४ ॥

तमुवाचोरगपतेर्दुहिता प्रहसन्त्यथ ।
न मे त्वमपराद्धोऽसि न नृपो बभ्रुवाहनः ॥ ००५ ॥

न जनित्री तथास्येयं मम या प्रेष्यवत्स्थिता ॥ ००५ ॥

श्रूयतां यद्यथा चेदं मया सर्वं विचेष्टितम् ।
न मे कोपस्त्वया कार्यः शिरसा त्वां प्रसादये ॥ ००६ ॥

त्वत्प्रीत्यर्थं हि कौरव्य कृतमेतन्मयानघ ।
यत्तच्छृणु महाबाहो निखिलेन धनञ्जय ॥ ००७ ॥

महाभारतयुद्धे यत्त्वया शांतनवो नृपः ।
अधर्मेण हतः पार्थ तस्यैषा निष्कृतिः कृता ॥ ००८ ॥

न हि भीष्मस्त्वया वीर युध्यमानो निपातितः ।
शिखण्डिना तु संसक्तस्तमाश्रित्य हतस्त्वया ॥ ००९ ॥

तस्य शान्तिमकृत्वा तु त्यजेस्त्वं यदि जीवितम् ।
कर्मणा तेन पापेन पतेथा निरये ध्रुवम् ॥ ०१० ॥

एषा तु विहिता शान्तिः पुत्राद्यां प्राप्तवानसि ।
वसुभिर्वसुधापाल गङ्गया च महामते ॥ ०११ ॥

पुरा हि श्रुतमेतद्धै वसुभिः कथितं मया ।
गङ्गायास्तीरमागम्य हते शांतनवे नृपे ॥ ०१२ ॥

आप्लुत्य देवा वसवः समेत्य च महानदीम् ।
इदमूचुर्वचो घोरं भागीरथ्या मते तदा ॥ ०१३ ॥

एष शांतनवो भीष्मो निहतः सव्यसाचिना ।
अयुध्यमानः सङ्ग्रामे संसक्तोऽन्येन भामिनि ॥ ०१४ ॥

तदनेनाभिषङ्गेण वयमप्यर्जुनं शुभे ।
शापेन योजयामेति तथास्त्विति च साब्रवीत् ॥ ०१५ ॥

तदहं पितुरावेद्य भृशं प्रव्यथितेन्द्रिया ।
अभवं स च तच्छ्रुत्वा विषादमगमत्परम् ॥ ०१६ ॥

पिता तु मे वसून्गत्वा त्वदर्थं समयाचत ।
पुनः पुनः प्रसाद्यैनांस्त एनमिदमब्रुवन् ॥ ०१७ ॥

पुनस्तस्य महाभाग मणिपूरेश्वरो युवा ।
स एनं रणमध्यस्थं शरैः पातयिता भुवि ॥ ०१८ ॥

एवं कृते स नागेन्द्र मुक्तशापो भविष्यति ।
गच्छेति वसुभिश्चोक्तो मम चेदं शशंस सः ॥ ०१९ ॥

तच्छ्रुत्वा त्वं मया तस्माच्छापादसि विमोक्षितः ।
न हि त्वां देवराजोऽपि समरेषु पराजयेत् ॥ ०२० ॥

आत्मा पुत्रः स्मृतस्तस्मात्तेनेहासि पराजितः ।
नात्र दोषो मम मतः कथं वा मन्यसे विभो ॥ ०२१ ॥

इत्येवमुक्तो विजयः प्रसन्नात्माब्रवीदिदम् ।
सर्वं मे सुप्रियं देवि यदेतत्कृतवत्यसि ॥ ०२२ ॥

इत्युक्त्वाथाब्रवीत्पुत्रं मणिपूरेश्वरं जयः ।

चित्राङ्गदायाः शृण्वन्त्याः कौरव्यदुहितुस्तथा ॥ ०२३ ॥

युधिष्ठिरस्याश्वमेधः परां चैत्रीं भविष्यति ।
तत्रागच्छेः सहामात्यो मातृभ्यां सहितो नृप ॥ ०२४ ॥

इत्येवमुक्तः पार्थेन स राजा बभ्रुवाहनः ।
उवाच पितरं धीमानिदमस्राविलेक्षणः ॥ ०२५ ॥

उपयास्यामि धर्मज्ञ भवतः शासनादहम् ।
अश्वमेधे महायज्ञे द्विजातिपरिवेषकः ॥ ०२६ ॥

मम त्वनुग्रहार्थाय प्रविशस्व पुरं स्वकम् ।
भार्याभ्यां सह शत्रुघ्न मा भूत्तेऽत्र विचारणा ॥ ०२७ ॥

उषित्वेह विशल्यस्त्वं सुखं स्वे वेश्मनि प्रभो ।
पुनरश्वानुगमनं कर्तासि जयतां वर ॥ ०२८ ॥

इत्युक्तः स तु पुत्रेण तदा वानरकेतनः ।
स्मयन्प्रोवाच कौन्तेयस्तदा चित्राङ्गदासुतम् ॥ ०२९ ॥

विदितं ते महाबाहो यथा दीक्षां चराम्यहम् ।
न स तावत्प्रवेक्ष्यामि पुरं ते पृथुलोचन ॥ ०३० ॥

यथाकामं प्रयात्येष यज्ञियश्च तुरङ्गमः ।
स्वस्ति तेऽस्तु गमिष्यामि न स्थानं विद्यते मम ॥ ०३१ ॥

स तत्र विधिवत्तेन पूजितः पाकशासनिः ।
भार्याभ्यामभ्यनुज्ञातः प्रायाद्भरतसत्तमः ॥ ०३२ ॥

# मागधपराजयः

## अध्याय ०८३

वैशंपायन उवाच ॥

स तु वाजी समुद्रान्तां पर्यैत्य पृथिवीमिमाम् ।
निवृत्तोऽभिमुखो राजन्येन नागाह्वयं पुरम् ॥ ००१ ॥

अनुगच्छंश्च तेजस्वी निवृत्तोऽथ किरीटभृत् ।
यदृच्छया समापेदे पुरं राजगृहं तदा ॥ ००२ ॥

तमभ्याशगतं राजा जरासंधात्मजात्मजः ।
क्षत्रधर्मे स्थितो वीरः समरायाजुहाव ह ॥ ००३ ॥

ततः पुरात्स निष्क्रम्य रथी धन्वी शरी तली ।
मेघसंधिः पदातिं तं धनञ्जयमुपाद्रवत् ॥ ००४ ॥

आसाद्य च महातेजा मेघसंधिर्धनञ्जयम् ।
बालभावान्महाराज प्रोवाचेदं न कौशलात् ॥ ००५ ॥

किमयं चार्यते वाजी स्त्रीमध्य इव भारत ।
हयमेनं हरिष्यामि प्रयतस्व विमोक्षणे ॥ ००६ ॥

अदत्तानुनयो युद्धे यदि त्वं पितृभिर्मम ।
करिष्यामि तवातिथ्यं प्रहर प्रहरामि वा ॥ ००७ ॥

इत्युक्तः प्रत्युवाचैनं पाण्डवः प्रहसन्निव ।
विघ्नकर्ता मया वार्य इति मे व्रतमाहितम् ॥ ००८ ॥

भ्रात्रा ज्येष्ठेन नृपते तवापि विदितं ध्रुवम् ।

प्रहरस्व यथाशक्ति न मन्युर्विद्यते मम ॥ ००९ ॥

इत्युक्तः प्राहरत्पूर्वं पाण्डवं मगधेश्वरः ।
किरञ्शरसहस्राणि वर्षाणीव सहस्रदृक् ॥ ०१० ॥

ततो गाण्डीवभृच्छूरो गाण्डीवप्रेषितैः शरैः ।
चकार मोघांस्तान्बाणानयत्नाद्भरतर्षभ ॥ ०११ ॥

स मोघं तस्य बाणौघं कृत्वा वानरकेतनः ।
शरान्मुमोच ज्वलितान्दीप्तास्यानिव पन्नगान् ॥ ०१२ ॥

ध्वजे पताकादण्डेषु रथयन्त्रे हयेषु च ।
अन्येषु च रथाङ्गेषु न शरीरे न सारथौ ॥ ०१३ ॥

संरक्ष्यमाणः पार्थेन शरीरे फल्गुनस्य ह ।
मन्यमानः स्ववीर्यं तन्मागधः प्राहिणोच्छरान् ॥ ०१४ ॥

ततो गाण्डीवभृच्छूरो मागधेन समाहतः ।
बभौ वासन्तिक इव पलाशः पुष्पितो महान् ॥ ०१५ ॥

अवध्यमानः सोऽभ्यघ्नन्मागधः पाण्डवर्षभम् ।
तेन तस्थौ स कौरव्य लोकवीरस्य दर्शने ॥ ०१६ ॥

सव्यसाची तु सङ्क्रुद्धो विकृष्य बलवद्धनुः ।
हयांश्चकार निर्देहान्सारथेश्च शिरोऽहरत् ॥ ०१७ ॥

धनुश्चास्य महच्चित्रं क्षुरेण प्रचकर्त ह ।
हस्तावापं पताकां च ध्वजं चास्य न्यपातयत् ॥ ०१८ ॥

स राजा व्यथितो व्यश्वो विधनुर्हतसारथिः ।
गदामादाय कौन्तेयमभिदुद्राव वेगवान् ॥ ०१९ ॥

तस्यापतत एवाशु गदां हेमपरिष्कृताम् ।
शरैश्चकर्त बहुधा बहुभिर्गृध्रवाजितैः ॥ ०२० ॥

सा गदा शकलीभूता विशीर्णमणिबन्धना ।
व्याली निर्मुच्यमानेव पपातास्य सहस्रधा ॥ ०२१ ॥

विरथं तं विधन्वानं गदया परिवर्जितम् ।
नैच्छत्ताडयितुं धीमानर्जुनः समराग्रणीः ॥ ०२२ ॥

तत एनं विमनसं क्षत्रधर्मे समास्थितम् ।
सान्त्वपूर्वमिदं वाक्यमब्रवीत्कपिकेतनः ॥ ०२३ ॥

पर्याप्तः क्षत्रधर्मोऽयं दर्शितः पुत्र गम्यताम् ।
बह्वेतत्समरे कर्म तव बालस्य पार्थिव ॥ ०२४ ॥

युधिष्ठिरस्य संदेशो न हन्तव्या नृपा इति ।
तेन जीवसि राजंस्त्वमपराद्धोऽपि मे रणे ॥ ०२५ ॥

इति मत्वा स चात्मानं प्रत्यादिष्टं स्म मागधः ।
तथ्यमित्यवगम्यैनं प्राञ्जलिः प्रत्यपूजयत् ॥ ०२६ ॥

तमर्जुनः समाश्वास्य पुनरेवेदमब्रवीत् ।
आगन्तव्यं परां चैत्रीमश्वमेधे नृपस्य नः ॥ ०२७ ॥

इत्युक्तः स तथेत्युक्त्वा पूजयामास तं हयम् ।
फल्गुनं च युधां श्रेष्ठं विधिवत्सहदेवजः ॥ ०२८ ॥

ततो यथेष्टमगमत्पुनरेव स केसरी ।
ततः समुद्रतीरेण वङ्गान्पुण्ड्रान्सकेरलान् ॥ ०२९ ॥

तत्र तत्र च भूरीणि म्लेच्छसैन्यान्यनेकशः ।
विजिग्ये धनुषा राजन्गाण्डीवेन धनञ्जयः ॥ ०३० ॥

---

# एकलव्यसुतपराजयः

## अध्याय ०८४

वैशंपायन उवाच ॥

मागधेनार्चितो राजन्पाण्डवः श्वेतवाहनः ।
दक्षिणां दिशमास्थाय चारयामास तं हयम् ॥ ००१ ॥

ततः स पुनरावृत्य हयः कामचरो बली ।
आससाद पुरीं रम्यां चेदीनां शुक्तिसाह्वयाम् ॥ ००२ ॥

शरभेणार्चितस्तत्र शिशुपालात्मजेन सः ।
युद्धपूर्वेण मानेन पूजया च महाबलः ॥ ००३ ॥

तत्रार्चितो ययौ राजंस्तदा स तुरगोत्तमः ।
काशीनन्ध्रान्कोसलांश्च किरातानथ तङ्गणान् ॥ ००४ ॥

तत्र पूजां यथान्यायं प्रतिगृह्य स पाण्डवः ।
पुनरावृत्य कौन्तेयो दशार्णानगमत्तदा ॥ ००५ ॥

तत्र चित्राङ्गदो नाम बलवान्वसुधाधिपः ।
तेन युद्धमभूत्तस्य विजयस्यातिभैरवम् ॥ ००६ ॥

तं चापि वशमानीय किरीटी पुरुषर्षभः ।
निषादराज्ञो विषयमेकलव्यस्य जग्मिवान् ॥ ००७ ॥

एकलव्यसुतश्चैनं युद्धेन जगृहे तदा ।
ततश्चक्रे निषादैः स सङ्ग्रामं रोमहर्षणम् ॥ ००८ ॥

ततस्तमपि कौन्तेयः समरेष्वपराजितः ।
जिगाय समरे वीरो यज्ञविघ्नार्थमुद्यतम् ॥ ००९ ॥

स तं जित्वा महाराज नैषादिं पाकशासनिः ।
अर्चितः प्रययौ भूयो दक्षिणं सलिलार्णवम् ॥ ०१० ॥

तत्रापि द्रविडैरन्ध्रै रौद्रैर्माहिषकैरपि ।
तथा कोल्लगिरेयैश्च युद्धमासीत्किरीटिनः ॥ ०११ ॥

तुरगस्य वशेनाथ सुराष्ट्रानभितो ययौ ।
गोकर्णमपि चासाद्य प्रभासमपि जग्मिवान् ॥ ०१२ ॥

ततो द्वारवतीं रम्यां वृष्णिवीराभिरक्षिताम् ।
आससाद हयः श्रीमान्कुरुराजस्य यज्ञियः ॥ ०१३ ॥

तमुन्मथ्य हयश्रेष्ठं यादवानां कुमारकाः ।
प्रययुस्तांस्तदा राजन्नुग्रसेनो न्यवारयत् ॥ ०१४ ॥

ततः पुर्या विनिष्क्रम्य वृष्ण्यन्धकपतिस्तदा ।
सहितो वसुदेवेन मातुलेन किरीटिनः ॥ ०१५ ॥

तौ समेत्य कुरुश्रेष्ठं विधिवत्प्रीतिपूर्वकम् ।
परया भरतश्रेष्ठं पूजया समवस्थितौ ॥ ०१६ ॥

ततस्ताभ्यामनुज्ञातो ययौ येन हयो गतः ॥ ०१६ ॥

ततः स पश्चिमं देशं समुद्रस्य तदा हयः ।
क्रमेण व्यचरत्स्फीतं ततः पञ्चनदं ययौ ॥ ०१७ ॥

तस्मादपि स कौरव्य गान्धारविषयं हयः ।
विचचार यथाकामं कौन्तेयानुगतस्तदा ॥ ०१८ ॥

तत्र गान्धारराजेन युद्धमासीन्महात्मनः ।
घोरं शकुनिपुत्रेण पूर्ववैरानुसारिणा ॥ ०१९ ॥

---

# गान्धारपराजयः

## अध्याय ०८५

वैशंपायन उवाच ॥

शकुनेस्तु सुतो वीरो गान्धाराणां महारथः ।
प्रत्युद्ययौ गुडाकेशं सैन्येन महता वृतः ॥ ००१ ॥

हस्त्यश्वरथपूर्णेन पताकाध्वजमालिना ॥ ००१ ॥

अमृष्यमाणास्ते योधा नृपतेः शकुनेर्वधम् ।
अभ्ययुः सहिताः पार्थं प्रगृहीतशरासनाः ॥ ००२ ॥

तानुवाच स धर्मात्मा बीभत्सुरपराजितः ।
युधिष्ठिरस्य वचनं न च ते जगृहुर्हितम् ॥ ००३ ॥

वार्यमाणास्तु पार्थेन सान्त्वपूर्वममर्षिताः ।
परिवार्य हयं जग्मुस्ततश्चुक्रोध पाण्डवः ॥ ००४ ॥

ततः शिरांसि दीप्ताग्रैस्तेषां चिच्छेद पाण्डवः ।
क्षुरैर्गाण्डीवनिर्मुक्तैर्नातियत्नादिवार्जुनः ॥ ००५ ॥

ते वध्यमानाः पार्थेन हयमुत्सृज्य संभ्रमात् ।
न्यवर्तन्त महाराज शरवर्षार्दिता भृशम् ॥ ००६ ॥

वितुद्यमानस्तैश्चापि गान्धारैः पाण्डवर्षभः ।
आदिश्यादिश्य तेजस्वी शिरांस्येषां न्यपातयत् ॥ ००७ ॥

वध्यमानेषु तेष्वाजौ गान्धारेषु समन्ततः ।
स राजा शकुनेः पुत्रः पाण्डवं प्रत्यवारयत् ॥ ००८ ॥

तं युध्यमानं राजानं क्षत्रधर्मे व्यवस्थितम् ।
पार्थोऽब्रवीन्न मे वध्या राजानो राजशासनात् ॥ ००९ ॥

अलं युद्धेन ते वीर न तेऽस्त्यद्य पराजयः ॥ ००९ ॥

इत्युक्तस्तदनादृत्य वाक्यमज्ञानमोहितः ।
स शक्रसमकर्माणमवाकिरत सायकैः ॥ ०१० ॥

तस्य पार्थः शिरस्त्राणमर्धचन्द्रेण पत्रिणा ।
अपाहरदसंभ्रान्तो जयद्रथशिरो यथा ॥ ०११ ॥

तद्दृष्ट्वा विस्मयं जग्मुर्गान्धाराः सर्व एव ते ।
इच्छता तेन न हतो राजेत्यपि च ते विदुः ॥ ०१२ ॥

गान्धारराजपुत्रस्तु पलायनकृतक्षणः ।
बभौ तैरेव सहितस्त्रस्तैः क्षुद्रमृगैरिव ॥ ०१३ ॥

तेषां तु तरसा पार्थस्तत्रैव परिधावताम् ।
विजहारोत्तमाङ्गानि भल्लैः संनतपर्वभिः ॥ ०१४ ॥

उच्छ्रितांस्तु भुजान्केचिन्नाबुध्यन्त शरैर्हतान् ।
शरैर्गाण्डीवनिर्मुक्तैः पृथुभिः पार्थचोदितैः ॥ ०१५ ॥

संभ्रान्तनरनागाश्वमथ तद्विद्रुतं बलम् ।
हतविध्वस्तभूयिष्ठमावर्तत मुहुर्मुहुः ॥ ०१६ ॥

न ह्यदृश्यन्त वीरस्य केचिदग्रेऽग्र्यकर्मणः ।
रिपवः पात्यमाना वै ये सहेयुर्महाशरान् ॥ ०१७ ॥

ततो गान्धारराजस्य मन्त्रिवृद्धपुरःसरा ।
जननी निर्ययौ भीता पुरस्कृत्यार्घ्यमुत्तमम् ॥ ०१८ ॥

सा न्यवारयदव्यग्रा तं पुत्रं युद्धदुर्मदम् ।
प्रसादयामास च तं जिष्णुमक्लिष्टकारिणम् ॥ ०१९ ॥

तां पूजयित्वा कौन्तेयः प्रसादमकरोत्तदा ।
शकुनेश्चापि तनयं सान्त्वयन्निदमब्रवीत् ॥ ०२० ॥

न मे प्रियं महाबाहो यत्ते बुद्धिरियं कृता ।
प्रतियोद्धुममित्रघ्न भ्रातैव त्वं ममानघ ॥ ०२१ ॥

गान्धारीं मातरं स्मृत्वा धृतराष्ट्रकृतेन च ।
तेन जीवसि राजंस्त्वं निहतास्त्वनुगास्तव ॥ ०२२ ॥

मैवं भूः शाम्यतां वैरं मा ते भूद्बुद्धिरीदृशी ।
आगन्तव्यं परां चैत्रीमश्वमेधे नृपस्य नः ॥ ०२३ ॥

# यज्ञायतननिर्माणम्

## अध्याय ०८६

वैशंपायन उवाच ॥

इत्युक्त्वानुययौ पार्थो हयं तं कामचारिणम् ।
न्यवर्तत ततो वाजी येन नागाह्वयं पुरम् ॥ ००१ ॥

तं निवृत्तं तु शुश्राव चारेणैव युधिष्ठिरः ।
श्रुत्वार्जुनं कुशलिनं स च हृष्टमनाभवत् ॥ ००२ ॥

विजयस्य च तत्कर्म गान्धारविषये तदा ।
श्रुत्वान्येषु च देशेषु स सुप्रीतोऽभवन्नृपः ॥ ००३ ॥

एतस्मिन्नेव काले तु द्वादशीं माघपाक्षिकीम् ।
इष्टं गृहीत्वा नक्षत्रं धर्मराजो युधिष्ठिरः ॥ ००४ ॥

समानाय्य महातेजाः सर्वान्भ्रातॄन्महामनाः ।
भीमं च नकुलं चैव सहदेवं च कौरवः ॥ ००५ ॥

प्रोवाचेदं वचः काले तदा धर्मभृतां वरः ।
आमन्त्र्य वदतां श्रेष्ठो भीमं भीमपराक्रमम् ॥ ००६ ॥

आयाति भीमसेनासौ सहाश्वेन तवानुजः ।
यथा मे पुरुषाः प्राहुर्ये धनञ्जयसारिणः ॥ ००७ ॥

उपस्थितश्च कालोऽयमभितो वर्तते हयः ।
माघी च पौर्णमासीयं मासः शेषो वृकोदर ॥ ००८ ॥

तत्प्रस्थाप्यन्तु विद्वांसो ब्राह्मणा वेदपारगाः ।
वाजिमेधार्थसिद्ध्यर्थं देशं पश्यन्तु यज्ञियम् ॥ ००९ ॥

इत्युक्तः स तु तच्चक्रे भीमो नृपतिशासनम् ।
हृष्टः श्रुत्वा नरपतेरायान्तं सव्यसाचिनम् ॥ ०१० ॥

ततो ययौ भीमसेनः प्राज्ञैः स्थपतिभिः सह ।
ब्राह्मणानग्रतः कृत्वा कुशलान्यज्ञकर्मसु ॥ ०११ ॥

तं सशालचयग्रामं संप्रतोलीविटङ्किनम् ।
मापयामास कौरव्यो यज्ञवाटं यथाविधि ॥ ०१२ ॥

सदः सपत्नीसदनं साग्नीध्रमपि चोत्तरम् ।
कारयामास विधिवन्मणिहेमविभूषितम् ॥ ०१३ ॥

स्तम्भान्कनकचित्रांश्च तोरणानि बृहन्ति च ।
यज्ञायतनदेशेषु दत्त्वा शुद्धं च काञ्चनम् ॥ ०१४ ॥

अन्तःपुराणि राज्ञां च नानादेशनिवासिनाम् ।
कारयामास धर्मात्मा तत्र तत्र यथाविधि ॥ ०१५ ॥

ब्राह्मणानां च वेश्मानि नानादेशसमेयुषाम् ।
कारयामास भीमः स विविधानि ह्यनेकशः ॥ ०१६ ॥

तथा संप्रेषयामास दूतान्नृपतिशासनात् ।
भीमसेनो महाराज राज्ञामक्लिष्टकर्मणाम् ॥ ०१७ ॥

ते प्रियार्थं कुरुपतेराययुर्नृपसत्तमाः ।

रत्नान्यनेकान्यादाय स्त्रियोऽश्वानायुधानि च ॥ ०१८ ॥

तेषां निविशतां तेषु शिबिरेषु सहस्रशः ।
नर्दतः सागरस्येव शब्दो दिवमिवास्पृशत् ॥ ०१९ ॥

तेषामभ्यागतानां स राजा राजीवलोचनः ।
व्यादिदेशान्नपानानि शय्याश्चाप्यतिमानुषाः ॥ ०२० ॥

वाहनानां च विविधाः शालाः शालीक्षुगोरसैः ।
उपेताः पुरुषव्याघ्र व्यादिदेश स धर्मराट् ॥ ०२१ ॥

तथा तस्मिन्महायज्ञे धर्मराजस्य धीमतः ।
समाजग्मुर्मुनिगणा बहवो ब्रह्मवादिनः ॥ ०२२ ॥

ये च द्विजातिप्रवरास्तत्रासन्पृथिवीपते ।
समाजग्मुः सशिष्यांस्तान्प्रतिजग्राह कौरवः ॥ ०२३ ॥

सर्वांश्चताननुययौ यावदावसथादिति ।
स्वयमेव महातेजा दम्भं त्यक्त्वा युधिष्ठिरः ॥ ०२४ ॥

ततः कृत्वा स्थपतयः शिल्पिनोऽन्ये च ये तदा ।
कृत्स्नं यज्ञविधिं राजन्धर्मराज्ञे न्यवेदयन् ॥ ०२५ ॥

तच्छ्रुत्वा धर्मराजः स कृतं सर्वमनिन्दितम् ।
हृष्टरूपोऽभवद्राजा सह भ्रातृभिरच्युतः ॥ ०२६ ॥

# यज्ञसमृद्धिः

## अध्याय ०८७

वैशंपायन उवाच ॥

तस्मिन्यज्ञे प्रवृत्ते तु वाग्मिनो हेतुवादिनः ।
हेतुवादान्बहून्प्राहुः परस्परजिगीषवः ॥ ००१ ॥

ददृशुस्तं नृपतयो यज्ञस्य विधिमुत्तमम् ।
देवेन्द्रस्येव विहितं भीमेन कुरुनन्दन ॥ ००२ ॥

ददृशुस्तोरणान्यत्र शातकुम्भमयानि ते ।
शय्यासनविहारांश्च सुबहून्रत्नभूषितान् ॥ ००३ ॥

घटान्पात्रीः कटाहानि कलशान्वर्धमानकान् ।
न हि किञ्चिदसौवर्णमपश्यंस्तत्र पार्थिवाः ॥ ००४ ॥

यूपांश्च शास्त्रपठितान्दारवान्हेमभूषितान् ।
उपक्लृप्तान्यथाकालं विधिवद्भूरिवर्चसः ॥ ००५ ॥

स्थलजा जलजा ये च पशवः केचन प्रभो ।
सर्वानेव समानीतांस्तानपश्यन्त ते नृपाः ॥ ००६ ॥

गाश्चैव महिषीश्चैव तथा वृद्धाः स्त्रियोऽपि च ।
औदकानि च सत्त्वानि श्वापदानि वयांसि च ॥ ००७ ॥

जरायुजान्यण्डजानि स्वेदजान्युद्भिदानि च ।
पर्वतानूपवन्यानि भूतानि ददृशुश्च ते ॥ ००८ ॥

एवं प्रमुदितं सर्वं पशुगोधनधान्यतः ।

यज्ञवाटं नृपा दृष्ट्वा परं विस्मयमागमन् ॥ ००९ ॥

ब्राह्मणानां विशां चैव बहुमृष्टान्नमृद्धिमत् ॥ ००९ ॥

पूर्णे शतसहस्रे तु विप्राणां तत्र भुञ्जताम् ।
दुन्दुभिर्मेघनिर्घोषो मुहुर्मुहुरताड्यत ॥ ०१० ॥

विननादासकृत्सोऽथ दिवसे दिवसे तदा ।
एवं स ववृते यज्ञो धर्मराजस्य धीमतः ॥ ०११ ॥

अन्नस्य बहवो राजन्नुत्सर्गाः पर्वतोपमाः ।
दधिकुल्याश्च ददृशुः सर्पिषश्च ह्रदाञ्जनाः ॥ ०१२ ॥

जम्बूद्वीपो हि सकलो नानाजनपदायुतः ।
राजन्नदृश्यतैकस्थो राज्ञस्तस्मिन्महाक्रतौ ॥ ०१३ ॥

तत्र जातिसहस्राणि पुरुषाणां ततस्ततः ।
गृहीत्वा धनमाजग्मुर्बहूनि भरतर्षभ ॥ ०१४ ॥

राजानः स्रग्विणश्चापि सुमृष्टमणिकुण्डलाः ।
पर्यवेषन्द्विजाग्र्यांस्ताञ्शतशोऽथ सहस्रशः ॥ ०१५ ॥

विविधान्यन्नपानानि पुरुषा येऽनुयायिनः ।
तेषां नृपोपभोज्यानि ब्राह्मणेभ्यो ददुः स्म ते ॥ ०१६ ॥

# अर्जुनप्रत्यागमनम्

## अध्याय ०८८

वैशंपायन उवाच ॥

समागतान्वेदविदो राज्ञश्च पृथिवीश्वरान् ।
दृष्ट्वा युधिष्ठिरो राजा भीमसेनमथाब्रवीत् ॥ ००१ ॥

उपयाता नरव्याघ्रा य इमे जगदीश्वराः ।
एतेषां क्रियतां पूजा पूजार्हा हि नरेश्वराः ॥ ००२ ॥

इत्युक्तः स तथा चक्रे नरेन्द्रेण यशस्विना ।
भीमसेनो महातेजा यमाभ्यां सह भारत ॥ ००३ ॥

अथाभ्यगच्छद्गोविन्दो वृष्णिभिः सह धर्मजम् ।
बलदेवं पुरस्कृत्य सर्वप्राणभृतां वरः ॥ ००४ ॥

युयुधानेन सहितः प्रद्युम्नेन गदेन च ।
निशठेनाथ साम्बेन तथैव कृतवर्मणा ॥ ००५ ॥

तेषामपि परां पूजां चक्रे भीमो महाभुजः ।
विविशुस्ते च वेश्मानि रत्नवन्ति नरर्षभाः ॥ ००६ ॥

युधिष्ठिरसमीपे तु कथान्ते मधुसूदनः ।
अर्जुनं कथयामास बहुसङ्ग्रामकर्शितम् ॥ ००७ ॥

स तं पप्रच्छ कौन्तेयः पुनः पुनररिंदमम् ।
धर्मराड्भ्रातरं जिष्णुं समाचष्ट जगत्पतिः ॥ ००८ ॥

आगमद्द्वारकावासी ममाप्तः पुरुषो नृप ।
योऽद्राक्षीत्पाण्डवश्रेष्ठं बहुसङ्ग्रामकर्शितम्  ॥ ००९  ॥

समीपे च महाबाहुमाचष्ट च मम प्रभो ।
कुरु कार्याणि कौन्तेय हयमेधार्थसिद्धये  ॥ ०१०  ॥

इत्युक्तः प्रत्युवाचैनं धर्मराजो युधिष्ठिरः ।
दिष्ट्या स कुशली जिष्णुरुपयाति च माधव  ॥ ०११  ॥

तव यत्संदिदेशासौ पाण्डवानां बलाग्रणीः ।
तदाख्यातुमिहेच्छामि भवता यदुनन्दन  ॥ ०१२  ॥

इत्युक्ते राजशार्दूल वृष्ण्यन्धकपतिस्तदा ।
प्रोवाचेदं वचो वाग्मी धर्मात्मानं युधिष्ठिरम्  ॥ ०१३  ॥

इदमाह महाराज पार्थवाक्यं नरः स माम् ।
वाच्यो युधिष्ठिरः कृष्ण काले वाक्यमिदं मम  ॥ ०१४  ॥

आगमिष्यन्ति राजानः सर्वतः कौरवान्प्रति ।
तेषामेकैकशः पूजा कार्येत्येतत्क्षमं हि नः  ॥ ०१५  ॥

इत्येतद्वचनाद्राजा विज्ञाप्यो मम मानद ।
न तदात्ययिकं हि स्याद्यदर्घ्यानयने भवेत्  ॥ ०१६  ॥

कर्तुमर्हति तद्राजा भवांश्चाप्यनुमन्यताम् ।
राजद्वेषाद्विनश्येयुर्नेमा राजन्प्रजाः पुनः  ॥ ०१७  ॥

इदमन्यच्च कौन्तेय वचः स पुरुषोऽब्रवीत् ।
धनञ्जयस्य नृपते तन्मे निगदतः शृणु  ॥ ०१८  ॥

उपयास्यति यज्ञं नो मणिपूरपतिर्नृपः ।

पुत्रो मम महातेजा दयितो बभ्रुवाहनः ॥ ०१९ ॥

तं भवान्मदपेक्षार्थं विधिवत्प्रतिपूजयेत् ।
स हि भक्तोऽनुरक्तश्च मम नित्यमिति प्रभो ॥ ०२० ॥

इत्येतद्वचनं श्रुत्वा धर्मराजो युधिष्ठिरः ।
अभिनन्द्यास्य तद्वाक्यमिदं वचनमब्रवीत् ॥ ०२१ ॥

---

# अध्याय ०८९

युधिष्ठिर उवाच ॥

श्रुतं प्रियमिदं कृष्ण यत्त्वमर्हसि भाषितुम् ।
तन्मेऽमृतरसप्रख्यं मनो ह्लादयते विभो ॥ ००१ ॥

बहूनि किल युद्धानि विजयस्य नराधिपैः ।
पुनरासन्हृषीकेश तत्र तत्रेति मे श्रुतम् ॥ ००२ ॥

मन्निमित्तं हि स सदा पार्थः सुखविवर्जितः ।
अतीव विजयो धीमानिति मे दूयते मनः ॥ ००३ ॥

सञ्चिन्तयामि वार्ष्णेय सदा कुन्तीसुतं रहः ।
किं नु तस्य शरीरेऽस्ति सर्वलक्षणपूजिते ॥ ००४ ॥

अनिष्टं लक्षणं कृष्ण येन दुःखान्युपाश्नुते ॥ ००४ ॥

अतीव दुःखभागी स सततं कुन्तिनन्दनः ।
न च पश्यामि बीभत्सोर्निन्द्यं गात्रेषु किञ्चन ॥ ००५ ॥

श्रोतव्यं चेन्मयैतद्वै तन्मे व्याख्यातुमर्हसि ॥ ००५ ॥

इत्युक्तः स हृषीकेशो ध्यात्वा सुमहदन्तरम् ।
राजानं भोजराजन्यवर्धनो विष्णुरब्रवीत् ॥ ००६ ॥

न ह्यस्य नृपते किञ्चिदनिष्टमुपलक्षये ।
ऋते पुरुषसिंहस्य पिण्डिकेऽस्यातिकायतः ॥ ००७ ॥

ताभ्यां स पुरुषव्याघ्रो नित्यमध्वसु युज्यते ।
न ह्यन्यदनुपश्यामि येनासौ दुःखभाग्जयः ॥ ००८ ॥

इत्युक्तः स कुरुश्रेष्ठस्तथ्यं कृष्णेन धीमता ।
प्रोवाच वृष्णिशार्दूलमेवमेतदिति प्रभो ॥ ००९ ॥

कृष्णा तु द्रौपदी कृष्णं तिर्यक्सासूयमैक्षत ।
प्रतिजग्राह तस्यास्तं प्रणयं चापि केशिहा ॥ ०१० ॥

सख्युः सखा हृषीकेशः साक्षादिव धनञ्जयः ॥ ०१० ॥

तत्र भीमादयस्ते तु कुरवो यादवास्तथा ।
रेमुः श्रुत्वा विचित्रार्था धनञ्जयकथा विभो ॥ ०११ ॥

तथा कथयतामेव तेषामर्जुनसङ्कथाः ।
उपायाद्वचनान्मर्त्यो विजयस्य महात्मनः ॥ ०१२ ॥

सोऽभिगम्य कुरुश्रेष्ठं नमस्कृत्य च बुद्धिमान् ।
उपायातं नरव्याघ्रमर्जुनं प्रत्यवेदयत् ॥ ०१३ ॥

तच्छ्रुत्वा नृपतिस्तस्य हर्षबाष्पाकुलेक्षणः ।
प्रियाख्याननिमित्तं वै ददौ बहु धनं तदा ॥ ०१४ ॥

ततो द्वितीये दिवसे महाञ्शब्दो व्यवर्धत ।
आयाति पुरुषव्याघ्रे पाण्डवानां धुरंधरे ॥ ०१५ ॥

ततो रेणुः समुद्भूतो विबभौ तस्य वाजिनः ।
अभितो वर्तमानस्य यथोच्चैःश्रवसस्तथा ॥ ०१६ ॥

तत्र हर्षकला वाचो नराणां शुश्रुवेऽर्जुनः ।
दिष्ट्यासि पार्थ कुशली धन्यो राजा युधिष्ठिरः ॥ ०१७ ॥

कोऽन्यो हि पृथिवीं कृत्स्नामवजित्य सपार्थिवाम् ।
चारयित्वा हयश्रेष्ठमुपायायादृतेऽर्जुनम् ॥ ०१८ ॥

ये व्यतीता महात्मानो राजानः सगरादयः ।
तेषामपीदृशं कर्म न किञ्चिदनुशुश्रुम ॥ ०१९ ॥

नैतदन्ये करिष्यन्ति भविष्याः पृथिवीक्षितः ।
यत्त्वं कुरुकुलश्रेष्ठ दुष्करं कृतवानिह ॥ ०२० ॥

इत्येवं वदतां तेषां नृणां श्रुतिसुखा गिरः ।
शृण्वन्विवेश धर्मात्मा फल्गुनो यज्ञसंस्तरम् ॥ ०२१ ॥

ततो राजा सहामात्यः कृष्णश्च यदुनन्दनः ।
धृतराष्ट्रं पुरस्कृत्य ते तं प्रत्युद्ययुस्तदा ॥ ०२२ ॥

सोऽभिवाद्य पितुः पादौ धर्मराजस्य धीमतः ।
भीमादींश्चापि संपूज्य पर्यष्वजत केशवम् ॥ ०२३ ॥

तैः समेत्यार्चितस्तान्स प्रत्यर्च्य च यथाविधि ।
विशश्रामाथ धर्मात्मा तीरं लब्ध्वेव पारगः ॥ ०२४ ॥

एतस्मिन्नेव काले तु स राजा बभ्रुवाहनः ।
मातृभ्यां सहितो धीमान्कुरूनभ्याजगाम ह ॥ ०२५ ॥

स समेत्य कुरून्सर्वान्सर्वैस्तैरभिनन्दितः ।
प्रविवेश पितामह्याः कुन्त्या भवनमुत्तमम् ॥ ०२६ ॥

---

# यूपोच्छ्रयः

## अध्याय ०९०

वैशंपायन उवाच ॥

स प्रविश्य यथान्यायं पाण्डवानां निवेशनम् ।
पितामहीमभ्यवदत्साम्ना परमवल्गुना ॥ ००१ ॥

तथा चित्राङ्गदा देवी कौरव्यस्यात्मजापि च ।
पृथां कृष्णां च सहिते विनयेनाभिजग्मतुः ॥ ००२ ॥

सुभद्रां च यथान्यायं याश्चान्याः कुरुयोषितः ॥ ००२ ॥

ददौ कुन्ती ततस्ताभ्यां रत्नानि विविधानि च ।
द्रौपदी च सुभद्रा च याश्चाप्यन्या ददुः स्त्रियः ॥ ००३ ॥

ऊषतुस्तत्र ते देव्यौ महार्हशयनासने ।
सुपूजिते स्वयं कुन्त्या पार्थस्य प्रियकाम्यया ॥ ००४ ॥

स च राजा महावीर्यः पूजितो बभ्रुवाहनः ।

धृतराष्ट्रं महीपालमुपतस्थे यथाविधि ॥ ००५ ॥

युधिष्ठिरं च राजानं भीमादींश्चापि पाण्डवान् ।
उपगम्य महातेजा विनयेनाभ्यवादयत् ॥ ००६ ॥

स तैः प्रेम्णा परिष्वक्तः पूजितश्च यथाविधि ।
धनं चास्मै ददुर्भूरि प्रीयमाणा महारथाः ॥ ००७ ॥

तथैव स महीपालः कृष्णं चक्रगदाधरम् ।
प्रद्युम्न इव गोविन्दं विनयेनोपतस्थिवान् ॥ ००८ ॥

तस्मै कृष्णो ददौ राज्ञे महार्हमभिपूजितम् ।
रथं हेमपरिष्कारं दिव्याश्वयुजमुत्तमम् ॥ ००९ ॥

धर्मराजश्च भीमश्च यमजौ फल्गुनस्तथा ।
पृथक्पृथगतीवैनं मानार्हं समपूजयन् ॥ ०१० ॥

ततस्तृतीये दिवसे सत्यवत्याः सुतो मुनिः ।
युधिष्ठिरं समभ्येत्य वाग्मी वचनमब्रवीत् ॥ ०११ ॥

अद्य प्रभृति कौन्तेय यजस्व समयो हि ते ।
मुहूर्तो यज्ञियः प्राप्तश्चोदयन्ति च याजकाः ॥ ०१२ ॥

अहीनो नाम राजेन्द्र क्रतुस्तेऽयं विकल्पवान् ।
बहुत्वात्काञ्चनस्यास्य ख्यातो बहुसुवर्णकः ॥ ०१३ ॥

एवमेव महाराज दक्षिणां त्रिगुणां कुरु ।
त्रित्वं व्रजतु ते राजन्ब्राह्मणा ह्यत्र कारणम् ॥ ०१४ ॥

त्रीनश्वमेधानत्र त्वं संप्राप्य बहुदक्षिणान् ।
ज्ञातिवध्याकृतं पापं प्रहास्यसि नराधिप ॥ ०१५ ॥

पवित्रं परमं ह्येतत्पावनानां च पावनम् ।
यदश्वमेधावभृथं प्राप्स्यसे कुरुनन्दन ॥ ०१६ ॥

इत्युक्तः स तु तेजस्वी व्यासेनामिततेजसा ।
दीक्षां विवेश धर्मात्मा वाजिमेधाप्तये तदा ॥ ०१७ ॥

नराधिपः प्रायजत वाजिमेधं महाक्रतुम् ॥ ०१७ ॥

तत्र वेदविदो राजंश्चक्रुः कर्माणि याजकाः ।
परिक्रमन्तः शास्त्रज्ञा विधिवत्साधुशिक्षिताः ॥ ०१८ ॥

न तेषां स्खलितं तत्र नासीदपहुतं तथा ।
क्रमयुक्तं च युक्तं च चक्रुस्तत्र द्विजर्षभाः ॥ ०१९ ॥

कृत्वा प्रवर्ग्यं धर्मज्ञा यथावद्द्विजसत्तमाः ।
चक्रुस्ते विधिवद्राजंस्तथैवाभिषवं द्विजाः ॥ ०२० ॥

अभिषूय ततो राजन्सोमं सोमपसत्तमाः ।
सवनान्यानुपूर्व्येण चक्रुः शास्त्रानुसारिणः ॥ ०२१ ॥

न तत्र कृपणः कश्चिन्न दरिद्रो बभूव ह ।
क्षुधितो दुःखितो वापि प्राकृतो वापि मानवः ॥ ०२२ ॥

भोजनं भोजनार्थिभ्यो दापयामास नित्यदा ।
भीमसेनो महातेजाः सततं राजशासनात् ॥ ०२३ ॥

संस्तरे कुशलाश्चापि सर्वकर्माणि याजकाः ।
दिवसे दिवसे चक्रुर्यथाशास्त्रार्थचक्षुषः ॥ ०२४ ॥

नाषडङ्गविदत्रासीत्सदस्यस्तस्य धीमतः ।

नाव्रतो नानुपाध्यायो न च वादाक्षमो द्विजः ॥ ०२५ ॥

ततो यूपोच्छ्रये प्राप्ते षड्बैल्वान्भरतर्षभ ।
खादिरान्बिल्वसमितांस्तावतः सर्ववर्णिनः ॥ ०२६ ॥

देवदारुमयौ द्वौ तु यूपौ कुरुपतेः क्रतौ ।
श्लेष्मातकमयं चैकं याजकाः समकारयन् ॥ ०२७ ॥

शोभार्थं चापरान्यूपान्काञ्चनान्पुरुषर्षभ ।
स भीमः कारयामास धर्मराजस्य शासनात् ॥ ०२८ ॥

ते व्यराजन्त राजर्षे वासोभिरुपशोभिताः ।
नरेन्द्राभिगता देवान्यथा सप्तर्षयो दिवि ॥ ०२९ ॥

इष्टकाः काञ्चनीश्चात्र चयनार्थं कृताभवन् ।
शुशुभे चयनं तत्र दक्षस्येव प्रजापतेः ॥ ०३० ॥

चतुश्चित्यः स तस्यासीदष्टादशकरात्मकः ।
स रुक्मपक्षो निचितस्त्रिगुणो गरुडाकृतिः ॥ ०३१ ॥

ततो नियुक्ताः पशवो यथाशास्त्रं मनीषिभिः ।
तं तं देवं समुद्दिश्य पक्षिणः पशवश्च ये ॥ ०३२ ॥

ऋषभाः शास्त्रपठितास्तथा जलचराश्च ये ।
सर्वांस्तानभ्ययुञ्जंस्ते तत्राग्निचयकर्मणि ॥ ०३३ ॥

यूपेषु नियतं चासीत्पशूनां त्रिशतं तथा ।
अश्वरत्नोत्तरं राज्ञः कौन्तेयस्य महात्मनः ॥ ०३४ ॥

स यज्ञः शुशुभे तस्य साक्षाद्देवर्षिसङ्कुलः ।
गन्धर्वगणसङ्कीर्णः शोभितोऽप्सरसां गणैः ॥ ०३५ ॥

स किंपुरुषगीतैश्च किंनरैरुपशोभितः ।
सिद्धविप्रनिवासैश्च समन्तादभिसंवृतः ॥ ०३६ ॥

तस्मिन्सदसि नित्यास्तु व्यासशिष्या द्विजोत्तमाः ।
सर्वशास्त्रप्रणेतारः कुशला यज्ञकर्मसु ॥ ०३७ ॥

नारदश्च बभूवात्र तुम्बुरुश्च महाद्युतिः ।
विश्वावसुश्चित्रसेनस्तथान्ये गीतकोविदाः ॥ ०३८ ॥

गन्धर्वा गीतकुशला नृत्तेषु च विशारदाः ।
रमयन्ति स्म तान्विप्रान्यज्ञकर्मान्तरेष्वथ ॥ ०३९ ॥

---

# यज्ञसमाप्तिः

# नकुलोपाख्यानम्

## अध्याय ०९१

वैशंपायन उवाच ॥

शमयित्वा पशूनन्यान्विधिवद्द्विजसत्तमाः ।
तुरगं तं यथाशास्त्रमालभन्त द्विजातयः ॥ ००१ ॥

ततः सञ्ज्ञाप्य तुरगं विधिवद्याजकर्षभाः ।
उपसंवेशयन्राजंस्ततस्तां द्रुपदात्मजाम् ॥ ००२ ॥

कलाभिस्तिसृभी राजन्यथाविधि मनस्विनीम् ॥ ००२ ॥

उद्धृत्य तु वपां तस्य यथाशास्त्रं द्विजर्षभाः ।
श्रपयामासुरव्यग्राः शास्त्रवद्भरतर्षभ ॥ ००३ ॥

तं वपाधूमगन्धं तु धर्मराजः सहानुजः ।
उपाजिघ्रद्यथान्यायं सर्वपाप्मापहं तदा ॥ ००४ ॥

शिष्टान्यङ्गानि यान्यासंस्तस्याश्वस्य नराधिप ।
तान्यग्नौ जुहुवुर्धीराः समस्ताः षोडशर्त्विजः ॥ ००५ ॥

संस्थाप्यैवं तस्य राज्ञस्तं क्रतुं शक्रतेजसः ।
व्यासः सशिष्यो भगवान्वर्धयामास तं नृपम् ॥ ००६ ॥

ततो युधिष्ठिरः प्रादात्सदस्येभ्यो यथाविधि ।
कोटीसहस्रं निष्काणां व्यासाय तु वसुंधराम् ॥ ००७ ॥

प्रतिगृह्य धरां राजन्व्यासः सत्यवतीसुतः ।
अब्रवीद्भरतश्रेष्ठं धर्मात्मानं युधिष्ठिरम् ॥ ००८ ॥

पृथिवी भवतस्त्वेषा संन्यस्ता राजसत्तम ।
निष्क्रयो दीयतां मह्यं ब्राह्मणा हि धनार्थिनः ॥ ००९ ॥

युधिष्ठिरस्तु तान्विप्रान्प्रत्युवाच महामनाः ।
भ्रातृभिः सहितो धीमान्मध्ये राज्ञां महात्मनाम् ॥ ०१० ॥

अश्वमेधे महायज्ञे पृथिवी दक्षिणा स्मृता ।
अर्जुनेन जिता सेयमृत्विग्भ्यः प्रापिता मया ॥ ०११ ॥

वनं प्रवेक्ष्ये विप्रेन्द्रा विभजध्वं महीमिमाम् ।
चतुर्धा पृथिवीं कृत्वा चातुर्होत्रप्रमाणतः ॥ ०१२ ॥

नाहमादातुमिच्छामि ब्रह्मस्वं मुनिसत्तमाः ।
इदं हि मे मतं नित्यं भ्रातॄणां च ममानघाः ॥ ०१३ ॥

इत्युक्तवति तस्मिंस्ते भ्रातरो द्रौपदी च सा ।
एवमेतदिति प्राहुस्तदभूद्रोमहर्षणम् ॥ ०१४ ॥

ततोऽन्तरिक्षे वागासीत्साधु साध्विति भारत ।
तथैव द्विजसंघानां शंसतां विबभौ स्वनः ॥ ०१५ ॥

द्वैपायनस्तथोक्तस्तु पुनरेव युधिष्ठिरम् ।
उवाच मध्ये विप्राणामिदं संपूजयन्मुनिः ॥ ०१६ ॥

दत्तैषा भवता मह्यं तां ते प्रतिददाम्यहम् ।
हिरण्यं दीयतामेभ्यो द्विजातिभ्यो धरास्तु ते ॥ ०१७ ॥

ततोऽब्रवीद्वासुदेवो धर्मराजं युधिष्ठिरम् ।
यथाह भगवान्व्यासस्तथा तत्कर्तुमर्हसि ॥ ०१८ ॥

इत्युक्तः स कुरुश्रेष्ठः प्रीतात्मा भ्रातृभिः सह ।
कोटिकोटिकृतां प्रादाद्दक्षिणां त्रिगुणां क्रतोः ॥ ०१९ ॥

न करिष्यति तल्लोके कश्चिदन्यो नराधिपः ।
यत्कृतं कुरुसिंहेन मरुत्तस्यानुकुर्वता ॥ ०२० ॥

प्रतिगृह्य तु तद्द्रव्यं कृष्णद्वैपायनः प्रभुः ।
ऋत्विग्भ्यः प्रददौ विद्वांश्चतुर्धा व्यभजंश्च ते ॥ ०२१ ॥

पृथिव्या निष्क्रयं दत्त्वा तद्धिरण्यं युधिष्ठिरः ।
धूतपाप्मा जितस्वर्गो मुमुदे भ्रातृभिः सह ॥ ०२२ ॥

ऋत्विजस्तमपर्यन्तं सुवर्णनिचयं तदा ।
व्यभजन्त द्विजातिभ्यो यथोत्साहं यथाबलम् ॥ ०२३ ॥

यज्ञवाटे तु यत्किञ्चिद्धिरण्यमपि भूषणम् ।
तोरणानि च यूपांश्च घटाः पात्रीस्तथेष्टकाः ॥ ०२४ ॥

युधिष्ठिराभ्यनुज्ञाताः सर्वं तद्व्यभजन्द्विजाः ॥ ०२४ ॥

अनन्तरं ब्राह्मणेभ्यः क्षत्रिया जह्रिरे वसु ।
तथा विट्शूद्रसंघाश्च तथान्ये म्लेच्छजातयः ॥ ०२५ ॥

कालेन महता जह्रुस्तत्सुवर्णं ततस्ततः ॥ ०२५ ॥

ततस्ते ब्राह्मणाः सर्वे मुदिता जग्मुरालयान् ।
तर्पिता वसुना तेन धर्मराज्ञा महात्मना ॥ ०२६ ॥

स्वमंशं भगवान्व्यासः कुन्त्यै पादाभिवादनात् ।
प्रददौ तस्य महतो हिरण्यस्य महाद्युतिः ॥ ०२७ ॥

श्वशुरात्प्रीतिदायं तं प्राप्य सा प्रीतमानसा ।
चकार पुण्यं लोके तु सुमहान्तं पृथा तदा ॥ ०२८ ॥

गत्वा त्ववभृथं राजा विपाप्मा भ्रातृभिः सह ।
सभाज्यमानः शुशुभे महेन्द्रो दैवतैरिव ॥ ०२९ ॥

पाण्डवाश्च महीपालैः समेतैः संवृतास्तदा ।
अशोभन्त महाराज ग्रहास्तारागणैरिव ॥ ०३० ॥

राजभ्योऽपि ततः प्रादाद्रत्नानि विविधानि च ।
गजानश्वानलङ्कारान्स्त्रियो वस्त्राणि काञ्चनम् ॥ ०३१ ॥

तद्धनौघमपर्यन्तं पार्थः पार्थिवमण्डले ।
विसृजञ्शुशुभे राजा यथा वैश्रवणस्तथा ॥ ०३२ ॥

आनाय्य च तथा वीरं राजानं बभ्रुवाहनम् ।
प्रदाय विपुलं वित्तं गृहान्प्रास्थापयत्तदा ॥ ०३३ ॥

दुःशलायाश्च तं पौत्रं बालकं पार्थिवर्षभ ।
स्वराज्ये पितृभिर्गुप्ते प्रीत्या समभिषेचयत् ॥ ०३४ ॥

राज्ञश्चैवापि तान्सर्वान्सुविभक्तान्सुपूजितान् ।
प्रस्थापयामास वशी कुरुराजो युधिष्ठिरः ॥ ०३५ ॥

एवं बभूव यज्ञः स धर्मराजस्य धीमतः ।
बह्वन्नधनरत्नौघः सुरामैरेयसागरः ॥ ०३६ ॥

सर्पिःपङ्का ह्रदा यत्र बहवश्चान्नपर्वताः ।
रसालाकर्दमाः कुल्या बभूवुर्भरतर्षभ ॥ ०३७ ॥

भक्ष्यषाण्डवरागाणां क्रियतां भुज्यतामिति ।
पशूनां वध्यतां चापि नान्तस्तत्र स्म दृश्यते ॥ ०३८ ॥

मत्तोन्मत्तप्रमुदितं प्रगीतयुवतीजनम् ।
मृदङ्गशङ्खशब्दैश्च मनोरममभूत्तदा ॥ ०३९ ॥

दीयतां भुज्यतां चेति दिवारात्रमवारितम् ।
तं महोत्सवसङ्काशमतिहृष्टजनाकुलम् ॥ ०४० ॥

कथयन्ति स्म पुरुषा नानादेशनिवासिनः ॥ ०४० ॥

वर्षित्वा धनधाराभिः कामै रत्नैर्धनैस्तथा ।
विपाप्मा भरतश्रेष्ठः कृतार्थः प्राविशत्पुरम् ॥ ०४१ ॥

# अध्याय ०९२

जनमेजय उवाच ॥

पितामहस्य मे यज्ञे धर्मपुत्रस्य धीमतः ।
यदाश्चर्यमभूत्किञ्चित्तद्भवान्वक्तुमर्हति ॥ ००१ ॥

वैशंपायन उवाच ॥

श्रूयतां राजशार्दूल महदाश्चर्यमुत्तमम् ।
अश्वमेधे महायज्ञे निवृत्ते यदभूद्विभो ॥ ००२ ॥

तर्पितेषु द्विजाग्र्येषु ज्ञातिसंबन्धिबन्धुषु ।
दीनान्धकृपणे चापि तदा भरतसत्तम ॥ ००३ ॥

घुष्यमाणे महादाने दिक्षु सर्वासु भारत ।
पतत्सु पुष्पवर्षेषु धर्मराजस्य मूर्धनि ॥ ००४ ॥

बिलान्निष्क्रम्य नकुलो रुक्मपार्श्वस्तदानघ ।
वज्राशनिसमं नादममुञ्चत विशां पते ॥ ००५ ॥

सकृदुत्सृज्य तं नादं त्रासयानो मृगद्विजान् ।
मानुषं वचनं प्राह धृष्टो बिलशयो महान् ॥ ००६ ॥

सक्तुप्रस्थेन वो नायं यज्ञस्तुल्यो नराधिपाः ।
उञ्छवृत्तेर्वदान्यस्य कुरुक्षेत्रनिवासिनः ॥ ००७ ॥

तस्य तद्वचनं श्रुत्वा नकुलस्य विशां पते ।
विस्मयं परमं जग्मुः सर्वे ते ब्राह्मणर्षभाः ॥ ००८ ॥

ततः समेत्य नकुलं पर्यपृच्छन्त ते द्विजाः ।
कुतस्त्वं समनुप्राप्तो यज्ञं साधुसमागमम् ॥ ००९ ॥

किं बलं परमं तुभ्यं किं श्रुतं किं परायणम् ।
कथं भवन्तं विद्याम यो नो यज्ञं विगर्हसे ॥ ०१० ॥

अविलुप्यागमं कृत्स्नं विधिज्ञैर्याजकैः कृतम् ।
यथागमं यथान्यायं कर्तव्यं च यथाकृतम् ॥ ०११ ॥

पूजार्हाः पूजिताश्चात्र विधिवच्छास्त्रचक्षुषा ।
मन्त्रपूतं हुतश्चाग्निर्दत्तं देयममत्सरम् ॥ ०१२ ॥

तुष्टा द्विजर्षभाश्चात्र दानैर्बहुविधैरपि ।
क्षत्रियाश्च सुयुद्धेन श्राद्धैरपि पितामहाः ॥ ०१३ ॥

पालनेन विशस्तुष्टाः कामैस्तुष्टा वरस्त्रियः ।
अनुक्रोशैस्तथा शूद्रा दानशेषैः पृथग्जनाः ॥ ०१४ ॥

ज्ञातिसंबन्धिनस्तुष्टाः शौचेन च नृपस्य नः ।
देवा हविर्भिः पुण्यैश्च रक्षणैः शरणागताः ॥ ०१५ ॥

यदत्र तथ्यं तद्ब्रूहि सत्यसंध द्विजातिषु ।
यथाश्रुतं यथादृष्टं पृष्टो ब्राह्मणकाम्यया ॥ ०१६ ॥

श्रद्धेयवाक्यः प्राज्ञस्त्वं दिव्यं रूपं बिभर्षि च ।
समागतश्च विप्रैस्त्वं तत्त्वतो वक्तुमर्हसि ॥ ०१७ ॥

इति पृष्टो द्विजैस्तैः स प्रहस्य नकुलोऽब्रवीत् ।

नैषानृता मया वाणी प्रोक्ता दर्पेण वा द्विजाः ॥ ०१८ ॥

यन्मयोक्तमिदं किञ्चिद्युष्माभिश्चाप्युपश्रुतम् ।
सक्तुप्रस्थेन वो नायं यज्ञस्तुल्यो नराधिपाः ॥ ०१९ ॥

उञ्छवृत्तेर्वदान्यस्य कुरुक्षेत्रनिवासिनः ॥ ०१९ ॥

इत्यवश्यं मयैतद्वो वक्तव्यं द्विजपुङ्गवाः ।
शृणुताव्यग्रमनसः शंसतो मे द्विजर्षभाः ॥ ०२० ॥

अनुभूतं च दृष्टं च यन्मयाद्भुतमुत्तमम् ।
उञ्छवृत्तेर्यथावृत्तं कुरुक्षेत्रनिवासिनः ॥ ०२१ ॥

स्वर्गं येन द्विजः प्राप्तः सभार्यः ससुतस्नुषः ।
यथा चार्धं शरीरस्य ममेदं काञ्चनीकृतम् ॥ ०२२ ॥

---

# अध्याय ०९३

नकुल उवाच ॥

हन्त वो वर्तयिष्यामि दानस्य परमं फलम् ।
न्यायलब्धस्य सूक्ष्मस्य विप्रदत्तस्य यद्द्विजाः ॥ ००१ ॥

धर्मक्षेत्रे कुरुक्षेत्रे धर्मज्ञैर्बहुभिर्वृते ।
उञ्छवृत्तिर्द्विजः कश्चित्कापोतिरभवत्पुरा ॥ ००२ ॥

सभार्यः सह पुत्रेण सस्नुषस्तपसि स्थितः ।

वधूचतुर्थो वृद्धः स धर्मात्मा नियतेन्द्रियः ॥ ००३ ॥

षष्ठे काले तदा विप्रो भुङ्क्ते तैः सह सुव्रतः ।
षष्ठे काले कदाचिच्च तस्याहारो न विद्यते ॥ ००४ ॥

भुङ्क्तेऽन्यस्मिन्कदाचित्स षष्ठे काले द्विजोत्तमः ॥ ००४ ॥

कपोतधर्मिणस्तस्य दुर्भिक्षे सति दारुणे ।
नाविद्यत तदा विप्राः सञ्चयस्तान्निबोधत ॥ ००५ ॥

क्षीणौषधिसमावायो द्रव्यहीनोऽभवत्तदा ॥ ००५ ॥

काले कालेऽस्य संप्राप्ते नैव विद्येत भोजनम् ।
क्षुधापरिगताः सर्वे प्रातिष्ठन्त तदा तु ते ॥ ००६ ॥

उञ्छंस्तदा शुक्लपक्षे मध्यं तपति भास्करे ।
उष्णार्तश्च क्षुधार्तश्च स विप्रस्तपसि स्थितः ॥ ००७ ॥

उञ्छमप्राप्तवानेव सार्धं परिजनेन ह ॥ ००७ ॥

स तथैव क्षुधाविष्टः स्पृष्ट्वा तोयं यथाविधि ।
क्षपयामास तं कालं कृच्छ्रप्राणो द्विजोत्तमः ॥ ००८ ॥

अथ षष्ठे गते काले यवप्रस्थमुपार्जयत् ।
यवप्रस्थं च ते सक्तूनकुर्वन्त तपस्विनः ॥ ००९ ॥

कृतजप्याह्निकास्ते तु हुत्वा वह्निं यथाविधि ।
कुडवं कुडवं सर्वे व्यभजन्त तपस्विनः ॥ ०१० ॥

अथागच्छद्द्विजः कश्चिदतिथिर्भुञ्जतां तदा ।
ते तं दृष्ट्वातिथिं तत्र प्रहृष्टमनसोऽभवन् ॥ ०११ ॥

तेऽभिवाद्य सुखप्रश्नं पृष्ट्वा तमतिथिं तदा ।
विशुद्धमनसो दान्ताः श्रद्धादमसमन्विताः ॥ ०१२ ॥

अनसूयवो गतक्रोधाः साधवो गतमत्सराः ।
त्यक्तमाना जितक्रोधा धर्मज्ञा द्विजसत्तमाः ॥ ०१३ ॥

सब्रह्मचर्यं स्वं गोत्रं समाख्याय परस्परम् ।
कुटीं प्रवेशयामासुः क्षुधार्तमतिथिं तदा ॥ ०१४ ॥

इदमर्घ्यं च पाद्यं च बृसी चेयं तवानघ ।
शुचयः सक्तवश्चेमे नियमोपार्जिताः प्रभो ॥ ०१५ ॥

प्रतिगृह्णीष्व भद्रं ते मया दत्ता द्विजोत्तम ॥ ०१५ ॥

इत्युक्तः प्रतिगृह्याथ सक्तूनां कुडवं द्विजः ।
भक्षयामास राजेन्द्र न च तुष्टिं जगाम सः ॥ ०१६ ॥

स उञ्छवृत्तिः तं प्रेक्ष्य क्षुधापरिगतं द्विजम् ।
आहारं चिन्तयामास कथं तुष्टो भवेदिति ॥ ०१७ ॥

तस्य भार्याब्रवीद्राजन्मद्भागो दीयतामिति ।
गच्छत्वेष यथाकामं संतुष्टो द्विजसत्तमः ॥ ०१८ ॥

इति ब्रुवन्तीं तां साध्वीं धर्मात्मा स द्विजर्षभः ।
क्षुधापरिगतां ज्ञात्वा सक्तूंस्तान्नाभ्यनन्दत ॥ ०१९ ॥

जानन्वृद्धां क्षुधार्तां च श्रान्तां ग्लानां तपस्विनीम् ।
त्वगस्थिभूतां वेपन्तीं ततो भार्यामुवाच ताम् ॥ ०२० ॥

अपि कीटपतङ्गानां मृगाणां चैव शोभने ।

स्त्रियो रक्ष्याश्च पोष्याश्च नैवं त्वं वक्तुमर्हसि ॥ ०२१ ॥

अनुकम्पितो नरो नार्या पुष्टो रक्षित एव च ।
प्रपतेद्यशसो दीप्तान्न च लोकानवाप्नुयात् ॥ ०२२ ॥

इत्युक्ता सा ततः प्राह धर्मार्थौ नौ समौ द्विज ।
सक्तुप्रस्थचतुर्भागं गृहाणेमं प्रसीद मे ॥ ०२३ ॥

सत्यं रतिश्च धर्मश्च स्वर्गश्च गुणनिर्जितः ।
स्त्रीणां पतिसमाधीनं काङ्क्षितं च द्विजोत्तम ॥ ०२४ ॥

ऋतुर्मातुः पितुर्बीजं दैवतं परमं पतिः ।
भर्तुः प्रसादात्स्त्रीणां वै रतिः पुत्रफलं तथा ॥ ०२५ ॥

पालनाद्धि पतिस्त्वं मे भर्तासि भरणान्मम ।
पुत्रप्रदानाद्वरदस्तस्मात्सक्तून्गृहाण मे ॥ ०२६ ॥

जरापरिगतो वृद्धः क्षुधार्तो दुर्बलो भृशम् ।
उपवासपरिश्रान्तो यदा त्वमपि कर्शितः ॥ ०२७ ॥

इत्युक्तः स तया सक्तून्प्रगृह्येदं वचोऽब्रवीत् ।
द्विज सक्तूनिमान्भूयः प्रतिगृह्णीष्व सत्तम ॥ ०२८ ॥

स तान्प्रगृह्य भुक्त्वा च न तुष्टिमगमद्द्विजः ।
तमुञ्छवृत्तिरालक्ष्य ततश्चिन्तापरोऽभवत् ॥ ०२९ ॥

पुत्र उवाच ॥

सक्तूनिमान्प्रगृह्य त्वं देहि विप्राय सत्तम ।
इत्येवं सुकृतं मन्ये तस्मादेतत्करोम्यहम् ॥ ०३० ॥

भवान्हि परिपाल्यो मे सर्वयत्नैर्द्विजोत्तम ।
साधूनां काङ्क्षितं ह्येतत्पितुर्वृद्धस्य पोषणम् ॥ ०३१ ॥

पुत्रार्थो विहितो ह्येष स्थाविर्ये परिपालनम् ।
श्रुतिरेषा हि विप्रर्षे त्रिषु लोकेषु विश्रुता ॥ ०३२ ॥

प्राणधारणमात्रेण शक्यं कर्तुं तपस्त्वया ।
प्राणो हि परमो धर्मः स्थितो देहेषु देहिनाम् ॥ ०३३ ॥

पितोवाच ॥

अपि वर्षसहस्री त्वं बाल एव मतो मम ।
उत्पाद्य पुत्रं हि पिता कृतकृत्यो भवत्युत ॥ ०३४ ॥

बालानां क्षुद्बलवती जानाम्येतदहं विभो ।
वृद्धोऽहं धारयिष्यामि त्वं बली भव पुत्रक ॥ ०३५ ॥

जीर्णेन वयसा पुत्र न मा क्षुद्बाधतेऽपि च ।
दीर्घकालं तपस्तप्तं न मे मरणतो भयम् ॥ ०३६ ॥

पुत्र उवाच ॥

अपत्यमस्मि ते पुत्रस्त्राणात्पुत्रो हि विश्रुतः ।
आत्मा पुत्रः स्मृतस्तस्मात्त्राह्यात्मानमिहात्मना ॥ ०३७ ॥

पितोवाच ॥

रूपेण सदृशस्त्वं मे शीलेन च दमेन च ।
परीक्षितश्च बहुधा सक्तूनादद्मि ते ततः ॥ ०३८ ॥

इत्युक्त्वादाय तान्सक्तून्प्रीतात्मा द्विजसत्तमः ।

प्रहसन्निव विप्राय स तस्मै प्रददौ तदा ॥ ०३९ ॥

भुक्त्वा तानपि सक्तून्स नैव तुष्टो बभूव ह ।
उञ्छवृत्तिस्तु सव्रीडो बभूव द्विजसत्तमः ॥ ०४० ॥

तं वै वधूः स्थिता साध्वी ब्राह्मणप्रियकाम्यया ।
सक्तूनादाय संहृष्टा गुरुं तं वाक्यमब्रवीत् ॥ ०४१ ॥

संतानात्तव संतानं मम विप्र भविष्यति ।
सक्तूनिमानतिथये गृहीत्वा त्वं प्रयच्छ मे ॥ ०४२ ॥

तव प्रसवनिर्वृत्या मम लोकाः किलाक्षयाः ।
पौत्रेण तानवाप्नोति यत्र गत्वा न शोचति ॥ ०४३ ॥

धर्माद्या हि यथा त्रेता वह्नित्रेता तथैव च ।
तथैव पुत्रपौत्राणां स्वर्गे त्रेता किलाक्षया ॥ ०४४ ॥

पितॄंस्त्राणात्तारयति पुत्र इत्यनुशुश्रुम ।
पुत्रपौत्रैश्च नियतं साधुलोकानुपाश्नुते ॥ ०४५ ॥

श्वशुर उवाच ॥

वातातपविशीर्णाङ्गीं त्वां विवर्णां निरीक्ष्य वै ।
कर्शितां सुव्रताचारे क्षुधाविह्वलचेतसम् ॥ ०४६ ॥

कथं सक्तून्ग्रहीष्यामि भूत्वा धर्मोपघातकः ।
कल्याणवृत्ते कल्याणि नैवं त्वं वक्तुमर्हसि ॥ ०४७ ॥

षष्ठे काले व्रतवतीं शीलशौचसमन्विताम् ।
कृच्छ्रवृत्तिं निराहारां द्रक्ष्यामि त्वां कथं न्वहम् ॥ ०४८ ॥

बाला क्षुधार्ता नारी च रक्ष्या त्वं सततं मया ।
उपवासपरिश्रान्ता त्वं हि बान्धवनन्दिनी  ॥ ०४९  ॥

स्नुषोवाच  ॥

गुरोर्मम गुरुस्त्वं वै यतो दैवतदैवतम् ।
देवातिदेवस्तस्मात्त्वं सक्तूनादत्स्व मे विभो  ॥ ०५०  ॥

देहः प्राणश्च धर्मश्च शुश्रूषार्थमिदं गुरोः ।
तव विप्र प्रसादेन लोकान्प्राप्स्याम्यभीप्सितान्  ॥ ०५१  ॥

अवेक्ष्या इति कृत्वा त्वं दृढभक्त्येति वा द्विज ।
चिन्त्या ममेयमिति वा सक्तूनादातुमर्हसि  ॥ ०५२  ॥

श्वशुर उवाच  ॥

अनेन नित्यं साध्वी त्वं शीलवृत्तेन शोभसे ।
या त्वं धर्मव्रतोपेता गुरुवृत्तिमवेक्षसे  ॥ ०५३  ॥

तस्मात्सक्तून्ग्रहीष्यामि वधूर्नार्हसि वञ्चनाम् ।
गणयित्वा महाभागे त्वं हि धर्मभृतां वरा  ॥ ०५४  ॥

इत्युक्त्वा तानुपादाय सक्तून्प्रादाद्द्विजातये ।
ततस्तुष्टोऽभवद्विप्रस्तस्य साधोर्महात्मनः  ॥ ०५५  ॥

प्रीतात्मा स तु तं वाक्यमिदमाह द्विजर्षभम् ।
वाग्मी तदा द्विजश्रेष्ठो धर्मः पुरुषविग्रहः  ॥ ०५६  ॥

शुद्धेन तव दानेन न्यायोपात्तेन यत्नतः ।
यथाशक्ति विमुक्तेन प्रीतोऽस्मि द्विजसत्तम  ॥ ०५७  ॥

अहो दानं घुष्यते ते स्वर्गे स्वर्गनिवासिभिः ।
गगनात्पुष्पवर्षं च पश्यस्व पतितं भुवि ॥ ०५८ ॥

सुरर्षिदेवगन्धर्वा ये च देवपुरःसराः ।
स्तुवन्तो देवदूताश्च स्थिता दानेन विस्मिताः ॥ ०५९ ॥

ब्रह्मर्षयो विमानस्था ब्रह्मलोकगताश्च ये ।
काङ्क्षन्ते दर्शनं तुभ्यं दिवं गच्छ द्विजर्षभ ॥ ०६० ॥

पितृलोकगताः सर्वे तारिताः पितरस्त्वया ।
अनागताश्च बहवः सुबहूनि युगानि च ॥ ०६१ ॥

ब्रह्मचर्येण यज्ञेन दानेन तपसा तथा ।
अगह्वरेण धर्मेण तस्माद्गच्छ दिवं द्विज ॥ ०६२ ॥

श्रद्धया परया यस्त्वं तपश्चरसि सुव्रत ।
तस्माद्देवास्तवानेन प्रीता द्विजवरोत्तम ॥ ०६३ ॥

सर्वस्वमेतद्यस्मात्ते त्यक्तं शुद्धेन चेतसा ।
कृच्छ्रकाले ततः स्वर्गो जितोऽयं तव कर्मणा ॥ ०६४ ॥

क्षुधा निर्णुदति प्रज्ञां धर्म्यां बुद्धिं व्यपोहति ।
क्षुधापरिगतज्ञानो धृतिं त्यजति चैव ह ॥ ०६५ ॥

बुभुक्षां जयते यस्तु स स्वर्गं जयते ध्रुवम् ।
यदा दानरुचिर्भवति तदा धर्मो न सीदति ॥ ०६६ ॥

अनवेक्ष्य सुतस्नेहं कलत्रस्नेहमेव च ।
धर्ममेव गुरुं ज्ञात्वा तृष्णा न गणिता त्वया ॥ ०६७ ॥

द्रव्यागमो नृणां सूक्ष्मः पात्रे दानं ततः परम् ।

कालः परतरो दानाच्छ्रद्धा चापि ततः परा ॥ ०६८ ॥

स्वर्गद्वारं सुसूक्ष्मं हि नरैर्मोहान्न दृश्यते ।
स्वर्गार्गलं लोभबीजं रागगुप्तं दुरासदम् ॥ ०६९ ॥

तत्तु पश्यन्ति पुरुषा जितक्रोधा जितेन्द्रियाः ।
ब्राह्मणास्तपसा युक्ता यथाशक्तिप्रदायिनः ॥ ०७० ॥

सहस्रशक्तिश्च शतं शतशक्तिर्दशापि च ।
दद्यादपश्च यः शक्त्या सर्वे तुल्यफलाः स्मृताः ॥ ०७१ ॥

रन्तिदेवो हि नृपतिरपः प्रादादकिञ्चनः ।
शुद्धेन मनसा विप्र नाकपृष्ठं ततो गतः ॥ ०७२ ॥

न धर्मः प्रीयते तात दानैर्दत्तैर्महाफलैः ।
न्यायलब्धैर्यथा सूक्ष्मैः श्रद्धापूतैः स तुष्यति ॥ ०७३ ॥

गोप्रदानसहस्राणि द्विजेभ्योऽदान्नृगो नृपः ।
एकां दत्त्वा स पारक्यां नरकं समवाप्तवान् ॥ ०७४ ॥

आत्ममांसप्रदानेन शिबिरौशीनरो नृपः ।
प्राप्य पुण्यकृता.ण्ल्लोकान्मोदते दिवि सुव्रतः ॥ ०७५ ॥

विभवे न नृणां पुण्यं स्वशक्त्या स्वर्जितं सताम् ।
न यज्ञैर्विविधैर्विप्र यथान्यायेन सञ्चितैः ॥ ०७६ ॥

क्रोधो दानफलं हन्ति लोभात्स्वर्गं न गच्छति ।
न्यायवृत्तिर्हि तपसा दानवित्स्वर्गमश्नुते ॥ ०७७ ॥

न राजसूयैर्बहुभिरिष्ट्वा विपुलदक्षिणैः ।
न चाश्वमेधैर्बहुभिः फलं सममिदं तव ॥ ०७८ ॥

सक्तुप्रस्थेन हि जितो ब्रह्मलोकस्त्वयानघ ।
विरजो ब्रह्मभवनं गच्छ विप्र यथेच्छकम् ॥ ०७९ ॥

सर्वेषां वो द्विजश्रेष्ठ दिव्यं यानमुपस्थितम् ।
आरोहत यथाकामं धर्मोऽस्मि द्विज पश्य माम् ॥ ०८० ॥

पावितो हि त्वया देहो लोके कीर्तिः स्थिरा च ते ।
सभार्यः सहपुत्रश्च सस्नुषश्च दिवं व्रज ॥ ०८१ ॥

इत्युक्तवाक्यो धर्मेण यानमारुह्य स द्विजः ।
सभार्यः ससुतश्चापि सस्नुषश्च दिवं ययौ ॥ ०८२ ॥

तस्मिन्विप्रे गते स्वर्गं ससुते सस्नुषे तदा ।
भार्याचतुर्थे धर्मज्ञे ततोऽहं निःसृतो बिलात् ॥ ०८३ ॥

ततस्तु सक्तुगन्धेन क्लेदेन सलिलस्य च ।
दिव्यपुष्पावमर्दाच्च साधोर्दानलवैश्च तैः ॥ ०८४ ॥

विप्रस्य तपसा तस्य शिरो मे काञ्चनीकृतम् ॥ ०८४ ॥

तस्य सत्याभिसंधस्य सूक्ष्मदानेन चैव ह ।
शरीरार्धं च मे विप्राः शातकुम्भमयं कृतम् ॥ ०८५ ॥

पश्यतेदं सुविपुलं तपसा तस्य धीमतः ॥ ०८५ ॥

कथमेवंविधं मे स्यादन्यत्पार्श्वमिति द्विजाः ।
तपोवनानि यज्ञांश्च हृष्टोऽभ्येमि पुनः पुनः ॥ ०८६ ॥

यज्ञं त्वहमिमं श्रुत्वा कुरुराजस्य धीमतः ।
आशया परया प्राप्तो न चाहं काञ्चनीकृतः ॥ ०८७ ॥

ततो मयोक्तं तद्वाक्यं प्रहस्य द्विजसत्तमाः ।
सक्तुप्रस्थेन यज्ञोऽयं संमितो नेति सर्वथा ॥ ०८८ ॥

सक्तुप्रस्थलवैस्तैर्हि तदाहं काञ्चनीकृतः ।
न हि यज्ञो महानेष सदृशस्तैर्मतो मम ॥ ०८९ ॥

वैशंपायन उवाच ॥

इत्युक्त्वा नकुलः सर्वान्यज्ञे द्विजवरांस्तदा ।
जगामादर्शनं राजन्विप्रास्ते च ययुर्गृहान् ॥ ०९० ॥

एतत्ते सर्वमाख्यातं मया परपुरञ्जय ।
यदाश्चर्यमभूत्तस्मिन्वाजिमेधे महाक्रतौ ॥ ०९१ ॥

न विस्मयस्ते नृपते यज्ञे कार्यः कथञ्चन ।
ऋषिकोटिसहस्राणि तपोभिर्ये दिवं गताः ॥ ०९२ ॥

अद्रोहः सर्वभूतेषु संतोषः शीलमार्जवम् ।
तपो दमश्च सत्यं च दानं चेति समं मतम् ॥ ०९३ ॥

---

# अध्याय ०९४

जनमेजय उवाच ॥

यज्ञे सक्ता नृपतयस्तपःसक्ता महर्षयः ।
शान्तिव्यवसिता विप्राः शमो दम इति प्रभो ॥ ००१ ॥

तस्माद्यज्ञफलैस्तुल्यं न किञ्चिदिह विद्यते ।
इति मे वर्तते बुद्धिस्तथा चैतदसंशयम् ॥ ००२ ॥

यज्ञैरिष्ट्वा हि बहवो राजानो द्विजसत्तम ।
इह कीर्तिं परां प्राप्य प्रेत्य स्वर्गमितो गताः ॥ ००३ ॥

देवराजः सहस्राक्षः क्रतुभिर्भूरिदक्षिणैः ।
देवराज्यं महातेजाः प्राप्तवानखिलं विभुः ॥ ००४ ॥

यथा युधिष्ठिरो राजा भीमार्जुनपुरःसरः ।
सदृशो देवराजेन समृद्ध्या विक्रमेण च ॥ ००५ ॥

अथ कस्मात्स नकुलो गर्हयामास तं क्रतुम् ।
अश्वमेधं महायज्ञं राज्ञस्तस्य महात्मनः ॥ ००६ ॥

वैशंपायन उवाच ॥

यज्ञस्य विधिमग्र्यं वै फलं चैव नरर्षभ ।
गदतः शृणु मे राजन्यथावदिह भारत ॥ ००७ ॥

पुरा शक्रस्य यजतः सर्व ऊचुर्महर्षयः ।
ऋत्विक्षु कर्मव्यग्रेषु वितते यज्ञकर्मणि ॥ ००८ ॥

हूयमाने तथा वह्नौ होत्रे बहुगुणान्विते ।
देवेष्वाहूयमानेषु स्थितेषु परमर्षिषु ॥ ००९ ॥

सुप्रतीतैस्तदा विप्रैः स्वागमैः सुस्वनैर्नृप ।
अश्रान्तैश्चापि लघुभिरध्वर्युवृषभैस्तथा ॥ ०१० ॥

आलम्भसमये तस्मिन्गृहीतेषु पशुष्वथ ।
महर्षयो महाराज संबभूवुः कृपान्विताः ॥ ०११ ॥

ततो दीनान्पशून्दृष्ट्वा ऋषयस्ते तपोधनाः ।
ऊचुः शक्रं समागम्य नायं यज्ञविधिः शुभः ॥ ०१२ ॥

अपविज्ञानमेतत्ते महान्तं धर्ममिच्छतः ।
न हि यज्ञे पशुगणा विधिदृष्टाः पुरंदर ॥ ०१३ ॥

धर्मोपघातकस्त्वेष समारम्भस्तव प्रभो ।
नायं धर्मकृतो धर्मो न हिंसा धर्म उच्यते ॥ ०१४ ॥

आगमेनैव ते यज्ञं कुर्वन्तु यदि हेच्छसि ।
विधिदृष्टेन यज्ञेन धर्मस्ते सुमहान्भवेत् ॥ ०१५ ॥

यज बीजैः सहस्राक्ष त्रिवर्षपरमोषितैः ।
एष धर्मो महाञ्शक्र चिन्त्यमानोऽधिगम्यते ॥ ०१६ ॥

शतक्रतुस्तु तद्वाक्यमृषिभिस्तत्त्वदर्शिभिः ।
उक्तं न प्रतिजग्राह मानमोहवशानुगः ॥ ०१७ ॥

तेषां विवादः सुमहाञ्जज्ञे शक्रमहर्षिणाम् ।
जङ्गमैः स्थावरैर्वापि यष्टव्यमिति भारत ॥ ०१८ ॥

ते तु खिन्ना विवादेन ऋषयस्तत्त्वदर्शिनः ।
ततः संधाय शक्रेण पप्रच्छुर्नृपतिं वसुम् ॥ ०१९ ॥

महाभाग कथं यज्ञेष्वागमो नृपते स्मृतः ।
यष्टव्यं पशुभिर्मेध्यैरथो बीजैरजैरपि ॥ ०२० ॥

तच्छ्रुत्वा तु वचस्तेषामविचार्य बलाबलम् ।
यथोपनीतैर्यष्टव्यमिति प्रोवाच पार्थिवः ॥ ०२१ ॥

एवमुक्त्वा स नृपतिः प्रविवेश रसातलम् ।
उक्त्वेह वितथं राजंश्चेदीनामीश्वरः प्रभुः ॥ ०२२ ॥

अन्यायोपगतं द्रव्यमतीतं यो ह्यपण्डितः ।
धर्माभिकाङ्क्षी यजते न धर्मफलमश्नुते ॥ ०२३ ॥

धर्मवैतंसिको यस्तु पापात्मा पुरुषस्तथा ।
ददाति दानं विप्रेभ्यो लोकविश्वासकारकम् ॥ ०२४ ॥

पापेन कर्मणा विप्रो धनं लब्ध्वा निरङ्कुशः ।
रागमोहान्वितः सोऽन्ते कलुषां गतिमाप्नुते ॥ ०२५ ॥

तेन दत्तानि दानानि पापेन हतबुद्धिना ।
तानि सत्त्वमनासाद्य नश्यन्ति विपुलान्यपि ॥ ०२६ ॥

तस्याधर्मप्रवृत्तस्य हिंसकस्य दुरात्मनः ।
दाने न कीर्तिर्भवति प्रेत्य चेह च दुर्मतेः ॥ ०२७ ॥

अपि सञ्चयबुद्धिर्हि लोभमोहवशङ्गतः ।
उद्वेजयति भूतानि हिंसया पापचेतनः ॥ ०२८ ॥

एवं लब्ध्वा धनं लोभाद्यजते यो ददाति च ।
स कृत्वा कर्मणा तेन न सिध्यति दुरागमात् ॥ ०२९ ॥

उञ्छं मूलं फलं शाकमुदपात्रं तपोधनाः ।
दानं विभवतो दत्त्वा नराः स्वर्यान्ति धर्मिणः ॥ ०३० ॥

एष धर्मो महांस्त्यागो दानं भूतदया तथा ।
ब्रह्मचर्यं तथा सत्यमनुक्रोशो धृतिः क्षमा ॥ ०३१ ॥

सनातनस्य धर्मस्य मूलमेतत्सनातनम् ॥ ०३१ ॥

श्रूयन्ते हि पुरा विप्रा विश्वामित्रादयो नृपाः ।
विश्वामित्रोऽसितश्चैव जनकश्च महीपतिः ॥ ०३२ ॥

कक्षसेनार्ष्टिषेणौ च सिन्धुद्वीपश्च पार्थिवः ॥ ०३२ ॥

एते चान्ये च बहवः सिद्धिं परमिकां गताः ।
नृपाः सत्यैश्च दानैश्च न्यायलब्धैस्तपोधनाः ॥ ०३३ ॥

ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा ये चाश्रितास्तपः ।
दानधर्माग्निना शुद्धास्ते स्वर्गं यान्ति भारत ॥ ०३४ ॥

---

# अध्याय ०९५

जनमेजय उवाच ॥

धर्मागतेन त्यागेन भगवन्सर्वमस्ति चेत् ।
एतन्मे सर्वमाचक्ष्व कुशलो ह्यसि भाषितुम् ॥ ००१ ॥

ततोञ्छवृत्तेर्यद्वृत्तं सक्तुदाने फलं महत् ।
कथितं मे महद्ब्रह्मंस्तथ्यमेतदसंशयम् ॥ ००२ ॥

कथं हि सर्वयज्ञेषु निश्चयः परमो भवेत् ।
एतदर्हसि मे वक्तुं निखिलेन द्विजर्षभ ॥ ००३ ॥

वैशंपायन उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
अगस्त्यस्य महायज्ञे पुरावृत्तमरिंदम ॥ ००४ ॥

पुरागस्त्यो महातेजा दीक्षां द्वादशवार्षिकीम् ।
प्रविवेश महाराज सर्वभूतहिते रतः ॥ ००५ ॥

तत्राग्निकल्पा होतार आसन्सत्रे महात्मनः ।
मूलाहारा निराहाराः साश्मकुट्टा मरीचिपाः ॥ ००६ ॥

परिघृष्टिका वैघसिकाः संप्रक्षालास्तथैव च ।
यतयो भिक्षवश्चात्र बभूवुः पर्यवस्थिताः ॥ ००७ ॥

सर्वे प्रत्यक्षधर्माणो जितक्रोधा जितेन्द्रियाः ।
दमे स्थिताश्च ते सर्वे दम्भमोहविवर्जिताः ॥ ००८ ॥

वृत्ते शुद्धे स्थिता नित्यमिन्द्रियैश्चाप्यवाहिताः ।
उपासते स्म तं यज्ञं भुञ्जानास्ते महर्षयः ॥ ००९ ॥

यथाशक्त्या भगवता तदन्नं समुपार्जितम् ।
तस्मिन्सत्रे तु यत्किञ्चिदयोग्यं तत्र नाभवत् ॥ ०१० ॥

तथा ह्यनेकैर्मुनिभिर्महान्तः क्रतवः कृताः ॥ ०१० ॥

एवंविधेस्त्वगस्त्यस्य वर्तमाने महाध्वरे ।
न ववर्ष सहस्राक्षस्तदा भरतसत्तम ॥ ०११ ॥

ततः कर्मान्तरे राजन्नगस्त्यस्य महात्मनः ।
कथेयमभिनिर्वृत्ता मुनीनां भावितात्मनाम् ॥ ०१२ ॥

अगस्त्यो यजमानोऽसौ ददात्यन्नं विमत्सरः ।
न च वर्षति पर्जन्यः कथमन्नं भविष्यति ॥ ०१३ ॥

सत्रं चेदं महद्विप्रा मुनेर्द्वादशवार्षिकम् ।
न वर्षिष्यति देवश्च वर्षाण्येतानि द्वादश ॥ ०१४ ॥

एतद्भवन्तः सञ्चिन्त्य महर्षेरस्य धीमतः ।
अगस्त्यस्यातितपसः कर्तुमर्हन्त्यनुग्रहम् ॥ ०१५ ॥

इत्येवमुक्ते वचने ततोऽगस्त्यः प्रतापवान् ।
प्रोवाचेदं वचो वाग्मी प्रसाद्य शिरसा मुनीन् ॥ ०१६ ॥

यदि द्वादशवर्षाणि न वर्षिष्यति वासवः ।
चिन्तायज्ञं करिष्यामि विधिरेष सनातनः ॥ ०१७ ॥

यदि द्वादशवर्षाणि न वर्षिष्यति वासवः ।
व्यायामेनाहरिष्यामि यज्ञानन्यानतिव्रतान् ॥ ०१८ ॥

बीजयज्ञो मयायं वै बहुवर्षसमाचितः ।
बीजैः कृतैः करिष्ये च नात्र विघ्नो भविष्यति ॥ ०१९ ॥

नेदं शक्यं वृथा कर्तुं मम सत्रं कथञ्चन ।
वर्षिष्यतीह वा देवो न वा देवो भविष्यति ॥ ०२० ॥

अथ वाभ्यर्थनामिन्द्रः कुर्यान्न त्विह कामतः ।
स्वयमिन्द्रो भविष्यामि जीवयिष्यामि च प्रजाः ॥ ०२१ ॥

यो यदाहारजातश्च स तथैव भविष्यति ।
विशेषं चैव कर्तास्मि पुनः पुनरतीव हि ॥ ०२२ ॥

अद्येह स्वर्णमभ्येतु यच्चान्यद्वसु दुर्लभम् ।
त्रिषु लोकेषु यच्चास्ति तदिहागच्छतां स्वयम् ॥ ०२३ ॥

दिव्याश्चाप्सरसां संघाः सगन्धर्वाः सकिंनराः ।
विश्वावसुश्च ये चान्ये तेऽप्युपासन्तु वः सदा ॥ ०२४ ॥

उत्तरेभ्यः कुरुभ्यश्च यत्किञ्चिद्वसु विद्यते ।
सर्वं तदिह यज्ञे मे स्वयमेवोपतिष्ठतु ॥ ०२५ ॥

स्वर्गं स्वर्गसदश्चैव धर्मश्च स्वयमेव तु ॥ ०२५ ॥

इत्युक्ते सर्वमेवैतदभवत्तस्य धीमतः ।
ततस्ते मुनयो दृष्ट्वा मुनेस्तस्य तपोबलम् ॥ ०२६ ॥

विस्मिता वचनं प्राहुरिदं सर्वे महार्थवत् ॥ ०२६ ॥

प्रीताः स्म तव वाक्येन न त्विच्छामस्तपोव्ययम् ।
स्वैरेव यज्ञैस्तुष्टाः स्मो न्यायेनेच्छामहे वयम् ॥ ०२७ ॥

यज्ञान्दीक्षास्तथा होमान्यच्चान्यन्मृगयामहे ।
तन्नोऽस्तु स्वकृतैर्यज्ञैर्नान्यतो मृगयामहे ॥ ०२८ ॥

न्यायेनोपार्जिताहाराः स्वकर्मनिरता वयम् ।
वेदांश्च ब्रह्मचर्येण न्यायतः प्रार्थयामहे ॥ ०२९ ॥

न्यायेनोत्तरकालं च गृहेभ्यो निःसृता वयम् ।
धर्मदृष्टैर्विधिद्वारैस्तपस्तप्स्यामहे वयम् ॥ ०३० ॥

भवतः सम्यगेषा हि बुद्धिर्हिंसाविवर्जिता ।
एतामहिंसां यज्ञेषु ब्रूयास्त्वं सततं प्रभो ॥ ०३१ ॥

प्रीतास्ततो भविष्यामो वयं द्विजवरोत्तम ।
विसर्जिताः समाप्तौ च सत्रादस्माद्व्रजामहे ॥ ०३२ ॥

वैशंपायन उवाच ॥

तथा कथयतामेव देवराजः पुरंदरः ।
ववर्ष सुमहातेजा दृष्ट्वा तस्य तपोबलम् ॥ ०३३ ॥

असमाप्तौ च यज्ञस्य तस्यामितपराक्रमः ।
निकामवर्षी देवेन्द्रो बभूव जनमेजय ॥ ०३४ ॥

प्रसादयामास च तमगस्त्यं त्रिदशेश्वरः ।
स्वयमभ्येत्य राजर्षे पुरस्कृत्य बृहस्पतिम् ॥ ०३५ ॥

ततो यज्ञसमाप्तौ तान्विससर्ज महामुनीन् ।
अगस्त्यः परमप्रीतः पूजयित्वा यथाविधि ॥ ०३६ ॥

---

# अध्याय ०९६

जनमेजय उवाच ॥

कोऽसौ नकुलरूपेण शिरसा काञ्चनेन वै ।
प्राह मानुषवद्वाचमेतत्पृष्टो वदस्व मे ॥ ००१ ॥

वैशंपायन उवाच ॥

एतत्पूर्वं न पृष्टोऽहं न चास्माभिः प्रभाषितम् ।
श्रूयतां नकुलो योऽसौ यथा वागस्य मानुषी ॥ ००२ ॥

श्राद्धं सङ्कल्पयामास जमदग्निः पुरा किल ।
होमधेनुस्तमागाच्च स्वयं चापि दुदोह ताम् ॥ ००३ ॥

तत्क्षीरं स्थापयामास नवे भाण्डे दृढे शुचौ ।
तच्च क्रोधः स्वरूपेण पिठरं पर्यवर्तयत् ॥ ००४ ॥

जिज्ञासुस्तमृषिश्रेष्ठं किं कुर्याद्विप्रिये कृते ।
इति सञ्चिन्त्य दुर्मेधा धर्षयामास तत्पयः ॥ ००५ ॥

तमाज्ञाय मुनिः क्रोधं नैवास्य चुकुपे ततः ।
स तु क्रोधस्तमाहेदं प्राञ्जलिर्मूर्तिमान्स्थितः ॥ ००६ ॥

जितोऽस्मीति भृगुश्रेष्ठ भृगवो ह्यतिरोषणाः ।
लोके मिथ्याप्रवादोऽयं यत्त्वयास्मि पराजितः ॥ ००७ ॥

सोऽहं त्वयि स्थितो ह्यद्य क्षमावति महात्मनि ।
बिभेमि तपसः साधो प्रसादं कुरु मे विभो ॥ ००८ ॥

जनमेजय उवाच ॥

साक्षाद्दृष्टोऽसि मे क्रोध गच्छ त्वं विगतज्वरः ।
न ममापकृतं तेऽद्य न मन्युर्विद्यते मम ॥ ००९ ॥

यानुद्दिश्य तु सङ्कल्पः पयसोऽस्य कृतो मया ।
पितरस्ते महाभागास्तेभ्यो बुध्यस्व गम्यताम् ॥ ०१० ॥

इत्युक्तो जातसंत्रासः स तत्रान्तरधीयत ।
पितॄणामभिषङ्गात्तु नकुलत्वमुपागतः ॥ ०११ ॥

स तान्प्रसादयामास शापस्यान्तो भवेदिति ।
तैश्चाप्युक्तो यदा धर्मं क्षेप्स्यसे मोक्ष्यसे तदा ॥ ०१२ ॥

तैश्चोक्तो यज्ञियान्देशान्धर्मारण्यानि चैव ह ।

जुगुप्सन्परिधावन्स यज्ञं तं समुपासदत् ॥ ०१३ ॥

धर्मपुत्रमथाक्षिप्य सक्तुप्रस्थेन तेन सः ।
मुक्तः शापात्ततः क्रोधो धर्मो ह्यासीद्युधिष्ठिरः ॥ ०१४ ॥

एवमेतत्तदा वृत्तं तस्य यज्ञे महात्मनः ।
पश्यतां चापि नस्तत्र नकुलोऽन्तर्हितस्तदा ॥ ०१५ ॥

---

Mahabharata
Encoding : ISCII

Converted for devanagari output using xetex-itrans with sdvn mapping on July 23, 2013